रामनित्यादि। कपिप्रभुर्वाली राममुच्चैर्महता शब्देनोपालब्ध उपालब्धवान् लभिरात्मनेपद्यनिट् तस्य लुङि झलो झलीति सिचो लोपः झषस्तथोर्धोऽधः झलां जश् झशि शूरमानी शूरमात्मानं मन्यमानः आत्ममाने खश्चेति चकाराणिनिः अपवेदनया म्लायन् म्लानिमुपगच्छन् साधुमन्यं साधुमात्मानं मन्यमानं रामं तेनैव खश् तस्मिन् सार्व्वधातुके परतो दिवादिलात् श्यन् पूर्व्वपदस्य मुम् असाधुवदसाधुमिव असाधुना तुल्यं वर्त्तते इति वतिः॥ १२५॥

रामनित्यादि। अपवेदनया म्लायन् कपिप्रभुर्व्वाली उच्चैः शब्देन राममुपालब्ध निन्दितवान् लभेस्तनि झषस्तथोर्धोऽधीति सेर्लोपः झभान्तयोरिति तस्य धः झपूज्ञयोरिति भस्य वः शूर मानी आत्मानं शूरमन्यमानः अभिधानात् मन्यतेरात्मनोम नने णिन् यद्वा शूरसम्बन्धिमानोविद्यतेऽस्येति मेधाजादिति इन् वीराभिमानवानित्यर्थः शूरश्चासौ मानी चेति वा रामं कीदृशं साधुमन्यं साधुमात्मानं मन्यमानं आत्मवधूहरणेनोचि तस्य दण्डस्यैव करणात् मन्यात्मार्थेइति खश् श्यादले दिवा दिलात् श्यन् खित्यव्याजिति मन् असाधुवत् असाधुना तुल्यं असा धात् हननात् चत्ताम्यदति वत् असाधुं यथा निन्दति तथोपा लब्धेति वा॥ १२५॥

मृषासि त्वं हविर्याजी राघव च्छद्मतापसः। अन्य व्यासक्तघातित्वाद्ब्रह्मघ्ना पापसम्मितः॥ १२६॥

अपमनीषीत्यादि। हे राघव त्वं छद्मना तापसः सन् वृथैव मिथ्यैव हविर्याजी हविषा करणेनेष्टवानपि न लोकप्राप्तत्यभिप्रायः करणे यजइति भूते णिनिः इतःप्रभृति भूतइत्यधिक्रियते यतो ब्रह्मघ्नां पापसंमितः ब्रह्म हनन इति ब्रह्मेत्यादिना क्विप् तेषां पापेन तुल्यः कुतः अन्यव्यासक्तघातित्वात् अन्यस्मिन् सुग्रीवे व्यासक्तं मां हतवान् कर्मण्यिहनइति णिनिः तत्र कुत्सितग्रहणं कर्त्तव्य मित्युक्तं यदि सुग्रीवेण विरोधः किं तवायातमिति कुत्सितहननं ॥ १२६ ॥

अपेत्यादि। हे राघव त्वं हविर्याजी भूत्वा स्वर्गादिफलावाप्तये हविषा करणेन इष्टवानिति मिथ्या यज्वादित्वात् णिन् करणाद्यजोभूतेणिनिरिति परः स्वमते करणादिर्भूतकालस्य विशेषानुक्तेरर्थाद्गम्यते यतश्छद्मना तापसः तपस्वी न तु वस्तुतः अन्यव्यासक्तघातित्वात्त्वं ब्रह्मघ्नां ब्रह्माणं हतवतां पापसंमितः पापेन संमितस्तुल्यः तुल्यपापाश्रयत्वात् पुरुषोऽपि तुल्य इत्युच्यते पापेन करणभूतेन ब्रह्मघ्नां तुल्य इत्यन्वयः अन्यस्मिन् सुग्रीवे व्यासक्तं हतवानिति यज्वादित्वात् णिन् कर्मणो हनःकुत्सायामिति परः हनस्तक् खचौ वोक्तिविति घः तत्वस्तौ भावइति त्वं ब्रह्माणं हतवानिति चासुबिति क्विप् ब्रह्मभ्रूणवृत्रेषु क्विबिति परः स्वमते अविशेषात् कालत्रयं प्राप्तमतातीतविवक्षा सदागोऽलोपइत्यकारलोपे हलोऽसतः ॥१२६॥

पापकृत्सुकृता मध्ये राज्ञः पुण्यकृतः सुतः। माम पापं दुराचार किं निहत्याभिधास्यसि ॥१२७॥

मद्दैव दूर्णयचार पापेत्यादि। हे दुराचार अमपाप निहत्य पापकृत् कृतकिल्बिषः राज्ञोदशरथस्य पुण्यकृतः सुतः सुकृतां मध्ये किमभिधास्यसि वक्ष्यसि किं चेपेन किञ्चिदभिधातव्यमस्तीतिभावः सर्व्वत्र सुकर्म्मपापेत्यादिना क्विप्॥ १२७॥

पापेत्यादि। हे दुराचार अपापं मां निहत्य सुकृतां शोभनक्रियावतां मध्ये किमभिधास्यसि किं वक्ष्यसि यतस्त्वं पुण्यकृतो दशरथस्य सुतः पुत्रोऽपि भूत्वा पापकृत् पापं सुष्ठु पुण्यञ्च कृतवानसि चासुसित्यादिना क्विप् पुण्यादेः कर्म्मणः सोऽस्त्यत्र कर्त्तरि भूतइति परः स्वमतेऽविशेषात् सर्व्वं विवक्षितं॥ १२७॥

अग्निचित्सोमसुद्राजा रथचक्रचिदादिषु। अनले ष्विष्टवान् कस्मान्न त्वयापेक्षितः पिता॥ १२८॥

अग्निचिदित्यादि। कस्मात्त्वया पिता नापेक्षितः नानुष्ठितः येनैवं कृतवानसीति कीदृशः अग्निचित् आहिताग्निः अग्निं चितवानिति अग्नौ चेरिति क्विप् सोमसुत् सोमं सुतवान् सोमयाजी सोमेसुञ इति क्विप् अनलेषु अग्निषु इष्टवान् रथचक्रचिदादिषु रथचक्रमचीयतइति कर्म्मण्याख्यायामिति क्विप् आदिशब्दाच्छ्येनचिदादिकश्च अग्न्यर्थोऽपि तदाकारद्रव्यकाचयइत्युच्यते तद्वारे चाग्निरपि॥ १२८॥

अग्नीत्यादि। कथं त्वया पिता दशरथोराजा नापेक्षितः न चिन्तितः नानुष्ठितोवा येनैवं कृतमिति भावः अग्निचित् आहिताग्निः सोमसुत् सोमयाजी रथचक्रचिदादिषु अग्निविशेषेषु

इष्टवान् कृतयज्ञः अग्निं चितवान् सोमं सुतवान् रथचक्रवच्चीयते इति च चासुञित्यादिना क्विप् रथचक्रचिदादिष्वित्यादि शब्दात् श्येनचिदादिष्वपि अन्यर्थो रथचक्राद्याकार इष्टकारचनाविशेषः क्रियते तद्द्वारेणाग्निरपि रथचक्रचिदादितयाव्यपदिश्यते इष्टवानिति यजेः क्तवतुः यजस्खपाद्योरिति ञिः ॥ १२८ ॥

मांसविक्रयिणः कर्म्म व्याधस्यापि विगर्हितं । मां घ्नता भवताकारि निःशङ्कं पापदृश्वना ॥ १२९ ॥

मांसेत्यादि । मांसविक्रयिणः कुत्सितकर्म्मकारिणो व्याधस्यापि विगर्हितं निन्दितं कर्म्मणीनिर्विक्रिय इति इनिः तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं निकृष्टकर्म्मकरणेनेति यज्ञवता पापदृश्वना पापं दृष्टवता दृशेः क्वनिप् नसंयोगाद्वमन्तादिति अल्लोपप्रतिषेधः कर्म्म अकारि कृतं कर्म्मणि लुङ् निःशङ्कं शङ्कां त्यक्त्वा किं कुर्व्वता मां घ्नता मारयता हन्तेः शतरि गमहनेत्युपधालोपः होहन्तेरिति कुत्वं ॥ १२९ ॥

मांसेत्यादि । मांसविक्रयिणोव्याधस्यापि यद्विगर्हितं कर्म्म तत्त्वया मां घ्नता निःशङ्कं शङ्कां त्यक्त्वा कृतं पापदृश्वना पापं दृष्टवतापि पापानभिज्ञेन मांसोपजीविना व्याधेनापि अन्यायकस्य निष्प्रयोजनत्वाद्वानरस्य च हननं निन्द्यते भवता तु पापं जानतापि तत्कृतमिति भावः व्याधस्येति कर्त्तरि सम्बन्धविवक्षा यद्वा व्याधस्यापीदृशं कर्म्म लोकैर्व्विशेषेण निन्दितमित्यर्थः मांसविक्रयो

ऽस्यास्तीति नैकाजादिति इन् विक्रीणातेर्भूते कुत्सायामिति पर: तत्र साधु अत्र व्याधस्य मांसविक्रयणे कुत्साया अभावात् इन्नेस्त्वा सुपित्यादिना क्वनिप्॥ १२९ ॥

बुद्धिपूर्व्वं ध्रुवन्न त्वा राजकृत्वा पिता खलं। सह युध्वानमन्येन योऽहिनोमामनागसं ॥ १३० ॥

बुद्धिपूर्व्वमित्यादि। त्वत्पिता त्वां खलं असाधुचरितं ध्रुवन् गच्छन् ध्रुगतिस्थैर्य्ययोरिति तुदादौ पठ्यते तस्य गतौ ज्ञानार्थे वर्त्तमानस्य शतरि विकरणलोपे उवङादेशे रूपं यस्य राजकृत्वा कस्य तवेत्यर्थात् राजनियुधिकृञ इति क्वनिप् तत्तस्य बुद्धिपूर्व्वं ध्रुवमवश्यं तस्येति व्याख्याने कृत्प्रयोगे कर्म्मणि षष्ठ्या भवितव्यं यस्त्वं मामनागसमपापमन्येन सह युध्वानं अन्येन सुग्रीवेण सह योद्धुं प्रवृत्तं सहेचेति क्वनिप् अहिन: हिंसितवान् हिंसेर्लङि मध्यमपुरुषैकवचने अमि, श्नमलोपे हल्ङ्यादिलोपे रुत्वे च रूपं॥ १३० ॥

बुद्धीत्यादि। खलं दुष्टचरितं त्वां पिता दशरथो यस्य राजकृत्वा राजानं न कृतवान् तद्बुद्धिपूर्व्वं खलत्वविज्ञानपूर्व्वकमेव ध्रुवं निश्चितं चास्तुसित्यादिना कृञ: क्वनिप् स्वस्ततनृपिति दीर्घोपीना मित्यादिना त्वादेश: क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति न्यायात् ढघेकृतीत्यस्य विषयेऽपि कर्म्मक्रियेत्यादिना द्वितीया केचित्तु ध्रुविस्थैर्य्ये इत्यस्य शतरि ध्रुवन् धातूनामनेकार्थत्वात् ज्ञानार्थ: पिता त्वा खलं ध्रुवन् यस्य राजकृत्वा अर्थात्तव तद्बुद्धि

पूर्व्वमित्याहुः अन्ये तु इति निषेधे आशब्दः स्मरणे पीडायां वा राजकलेत्यत्र तदेवार्थाद्गम्यते मन्त्रः प्रश्लेषात् अखलमिति मामित्यस्य वक्ष्यमाणस्य विशेषणमित्याहुः खलत्वमाह यस्त्वं मां अहिंसो हतवान् कीदृशं अन्येन सुग्रीवेण सह युध्यानं योद्धुं प्रवृत्तं युधेः पूर्व्ववत् कानिप् अनागसं अमपराधं अहिमदति हिंसिहिंसायां घ्यः सिप् रुधादित्वात् अम् नमोनलोप्यदति इदनुबन्धजन्यनकारस्य लोपः हसङ्गादिसेरिति सेर्लोपः॥ १३० ॥

पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः। कौशल्याज शशादीनां तेषां नैकोऽप्यहं कपिः॥ १३१ ॥

मांसार्थं हत इति चेदाह पञ्चपञ्चेत्यादि। हे कौशल्याज कौशल्याजात सप्तम्यां जनेर्डः ये पञ्च पञ्चनखाः शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमइति कृतजैः कृतयुगजातैः सप्तम्यां जनेर्डः द्विजैर्द्विजातैः अन्येष्वपि दृश्यतइति डः सप्तम्यामित्युपलक्षणं असप्तम्यामपि दृश्यते भक्ष्याः भक्षणीयाः प्रोक्ताः तेषामहमेकोऽपि न भाविता अहं कपिः तत्किमिति हतोऽहं त्वयेति॥ १३१॥

पञ्चेत्यादि। राजभिर्म्मांसाय मृगाहन्यन्तइति समानं निराकुर्व्वन्नाह हे कौशल्याज ये पञ्चनखाः पञ्च शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमइत्यादिवाक्येन कृतजैः सत्ययुगजातैर्द्विजैर्महर्षिभिर्भक्षणयोग्याः प्रोक्ताः कथिताः तेषां शशादीनां मध्ये अहं नैकोऽपि यतःकपिरहं अतोऽभक्ष्यत्वान्मम वधोव्यर्थएव कौशल्यायाः सकाशाज्जातः कृते जातः द्विर्ज्जातइति च हनजनादिति डः पैतृकधर्म्माशाहितया कुत्सार्थं मातुरुत्कीर्त्तनं॥ १३१ ॥

कथं दुष्टः स्वयं धर्म्मे प्रजास्त्वं पालयिष्यसि। आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथन्न वा॥ १३२॥

कथमित्यादि। स्वयमात्मना धर्म्मे दुष्टः दुस्थः सन् अपदुःसुषुस्थइत्यौणादिकः कुप्रत्ययः कथं प्रजाः पालयिष्यसि नैवेति भावः उपसर्गेचसंज्ञायामिति जनेर्डः कथं वा सौमित्रेर्भ्रातुरात्मानुजस्य कनीयसः आत्मानमनुजात इत्यनौ कर्म्मणि इति डः न जिह्रेषि न लज्जसे॥ १३२॥

कथमित्यादि। त्वं कथं प्रजाः पालयिष्यसि अपि तु नैवेति भावः यतः स्वयमात्मनो धर्म्मे दुःस्थः दुःखेन तिष्ठतीति हनजनादिति डः दुष्ठुरिति पाठे औणादिकः कुप्रत्ययः षत्वञ्चाभिधानात् प्रजायन्तइति प्रजालोकाः पूर्व्वेण डः स्त्रीत्वं संज्ञा चाभिधानात् आत्मानुजस्य सौमित्रेः कथं न वा जिह्रेषि न लज्जसे आत्मानमनुजातइति पूर्व्ववत् डः॥ १३२॥

मन्ये किञ्जमहं घ्नन्तं त्वामक्षत्रियजे रणे। लक्ष्मणाधिज दुर्वृत्तं प्रयुक्तमनुजेन नः॥ १३३॥

मन्यइत्यादि। किञ्जं त्वामहं कुतोऽपि जातं न राजजातं मन्ये पञ्चम्यामजाताविति डः घ्नन्तं मारयन्तं अक्षत्रियजे रणे क्षत्रियइजाते हे लक्ष्मणाधिज लक्ष्मणाग्रज नोऽस्माकमनुजेन भ्रात्रा प्रयुक्तं जातावपि दृश्यते अक्षत्रियजइति उपसर्गे च संज्ञायामित्युक्तं असंज्ञायामपि दृश्यते लक्ष्मणाधिजइति अनौकर्म्मणीत्युक्तं कर्म्मण्यपि दृश्यते अनुजइति सर्व्वत्रान्येष्वपि दृश्यतइति डः इत्युपपदाधिकारः॥ १३३॥

मन्ये इत्यादि। हे लक्ष्मणाधिज हे दुर्वृत्त दुश्चरित्र अहं त्वां किञ्च कुतोऽपि जातं कुत्सिताद्वा जातं मन्ये न तु राज्ञो जातं यतः अक्षत्रियजे क्षत्रियादजाते रणे मां प्रमत्तं मारयन्तं अस्माकमनुजेन कनिष्ठेन सुग्रीवेण प्रयुक्तं सर्व्वत्र हननमनादिति जनेर्डः परे तु विशेषसूत्राण्युक्त्वा अन्यत्रापि दृश्यत इत्यनेन तेषां प्रायिकत्वं बोधयन्ति तथाहि पञ्चम्यन्तादजातेर्डः इत्यस्य किञ्च इत्युदाहरणं जातेरपि अक्षत्रियज इत्युदाहृतं उपसर्गात् संज्ञायामित्यस्य प्रजास्त्वं पालयिष्यसीत्युदाहृतं असंज्ञायामपि अधिज इति कर्म्मणोऽमोरित्यस्य आत्मानुजस्य जिह्रेषीत्युदाहरणं अकर्म्मणोऽपि अनुज इति अतएव महाधिया वोपदेवेन विशेषेणोक्तः ॥१३३॥

प्रत्यूचे वालिनं रामो नाकृतं कृतवानहं। यज्वभिः सुत्वभिः पूर्व्वैर्जरद्भिश्च कपीश्वर॥१३४॥

प्रत्यूच इत्यादि। रामोऽपि वालिनं प्रत्यूचे प्रत्युक्तवान् किमित्याह हे कपीश्वर पूर्व्वैर्जरद्भिर्वृद्धैः जीर्य्यतेरतृन् यज्वभिः याज्ञिकैः सुत्वभिः सोमयाजिभिः सुयजोर्ङ्वनिप् नाकृतं कृतवानहं अपि तु कृतमेव कृतवानहं निष्ठेति भूते क्तक्तवतू॥ १३४ ॥

प्रत्यूच इत्यादि। रामो वालिनं प्रत्यूचे किं प्रत्युक्तवानित्याह हे कपीश्वर यज्वभिर्याज्ञिकैः सुत्वभिः सोमपीतिभिः पूर्व्वैर्जरद्भिर्वृद्धैर्मान्धातृप्रभृतिभिर्यन्न कृतं तदहं न कृतवान् दृष्टवानिति

चासुवितिवनिप् सुलामितिक्तनिप् खसतनूपिति जीर्य्यतीति शह: जीर्णाजोर्णोजरसपीत्यमर: ॥१२४॥

ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषां। ऊषुषां परदारैश्च सार्द्धं निधनमैषिषुः ॥१२५॥

तेहीत्यादि। हि यस्मात्ते पूर्व्वं वृद्धा जालैर्गले पाशैश्च तिरश्चां मृगपक्षिसरीसृपाणां तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन् अनि-अचइत्यलोपः तेषां निधनं विनाशमैषिषुः इष्टवन्तः इषेर्लुङि रूपं कीदृशं उपसेदुषां समीपमुपगतवतां तेषां समीपवर्त्तिनामुपद्रवकारित्वात् भाषायामिति क्वसुः परदारैश्च सार्द्धमूषुषां उषितवतां पूर्व्ववत्क्वसुः वसेर्यजादित्वात्संप्रसारणं ॥१२५॥

तेहीत्यादि। पूर्व्वोक्ते हेतुरयं हि यस्मात् तेऽपि पूर्व्वं वृद्धास्तिरश्चां पक्षिमृगादीनां जालैर्गले पाशैश्च निधनं ऐषिषुः इच्छन्ति स्म न केवलं तिरश्चां परदारैः परस्त्रीभिः सार्द्धं ऊषुषां कृतनिवासानाञ्च परदारैः सह वासमपिमश्लोके वक्ष्यति अतएव वध्यत्वप्रतिपादकं रूपद्वयमेव लभ्यस्ति उभयविशेषणमाह उपसेदुषां समीपमुपगतानां स्ववासस्थितानामपीत्यर्थः केचित्तु परदारैः सार्द्धमूषुषामिति तिरश्चामित्यस्य विशेषणं वध्यत्वदर्शनायेत्याहुः तिरोऽञ्चतीति क्विप् सहसन्तिरइति तिर्य्यादेशः तिर्य्यगममूयगिति तिरश्चादेशः उपपूर्व्वसदष्टीपमवदिति क्वसुः वसोर्घसेकाजिति इम् धुर्द्विश्यक्तीति द्वित्वं तूफत्वेति चतएत्वं खिलोपश्च वसोर्वःसेमपीति उः वसेः पूर्व्ववत् क्वसुः इम् च यथ

यद्देति खेर्ण्णिः यदृखपाद्योरिति प्रकृतेर्ण्णिः क्रिलादिति षः इषु इच्छायां अन् ण्यांषिः अनुच्छिदेः भूषोऽम्॥ १२५॥

अहन्तु शुश्रुवान् भ्रात्रा स्त्रियं भुक्तां कनीयसा।
उपेयिवाननूचानैर्निन्दितस्त्वं लताम्मृग॥ १२६॥

अहमित्यादि। हे लताम्मृग हे शाखाम्मृग अहं पुनः शुश्रुवान् श्रुतवान् पूर्व्ववत्कसुः यतुत भ्राता कनीयसा भुक्तां स्त्रियं त्वमुपेयिवान् सन् अनूचानैर्वेदविद्भिर्निन्दितस्ततोमे नैव दोषः उपेयिवाननूचानइति उपेयिवानित्यादिना निपातितौ॥ १२६॥

अहमित्यादि। हे लताम्मृग शाखाम्मृग अहं शुश्रुवान् किं शुश्रुवानित्याह कनीयसा कनिष्ठेन भ्रात्रा सुग्रीवेण भुक्तां स्त्रियं त्वमुपेयिवान् उपगतोऽसि अतएव अनूचानैर्व्वेदविद्भिस्त्वं निन्दितः तेन तव बधे मम दोषोनास्तीति भावः शृणोतेरिणश्च पूर्व्ववत् कसुः द्वित्वं वसोर्धसेकाज्झणातइमित्यत्र स्वसहितस्यैकाचोग्रहणं तेन न श्रोरिम् इणस्तु इमि यिणोऽध्यणाविति यादेशः खेःकितिर्वः अनुपूर्व्वब्रूञः कानः वचोऽरे पूर्व्ववत् त्रिः अनूचानः प्रवचने साङ्गेऽधीती गुरोश्च यइत्यमरः। लता ज्योतिष्मती पृक्का शाखा वल्ली प्रियङ्गुष्विति विश्वः॥ १२६॥

अन्वनैषीत्ततोबाली त्रपावानिव राघवं। न्यचिक्षिपच्चाङ्गदं यत्नात् काकुत्स्थे तनयं प्रियं॥ १२७॥

अन्वेत्यादि। ततोरामवचनादनन्तरं वाली राघवमन्वनैषीत् अनुनीतवान् इव चम्यतां यदजानता मयोक्तमिति नयते र्लुङित्यनेन भूतसामान्ये लुङ् त्रपावानिव यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदञ्च प्रियं तनयं काकुत्स्थे रामे न्यचिपत् न्यस्तवान् यत्नादादरात् चिपेरनद्यतने लङ् लकारप्रत्ययस्य तिङिति प्रतिषेधान्न कृत्संज्ञा॥ १३७॥

अन्वेत्यादि। ततोरामवाक्यानन्तरं वाली राघवमन्वनैषीत् अनुनीतवान् णीञ्प्रापणे नेमेकाजिति इट्निषेधः अजवदेति त्रिः त्रपावानिव वस्तुतोमृगस्य भ्रातृवधूहरणेऽपि त्रपा नास्ति किन्तु यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदनामानं प्रियं पुत्रं काकुत्स्थे रामे यत्नात् न्यचिपत् समर्पितवान्॥ १३७॥

म्रियमाणः ससुग्रीवं प्रोचे सद्भावमागतः। सम्भविष्यावएकस्यामभिजानासि मातरि॥ १३८॥

म्रियेत्यादि। सवाली म्रियमाणः सन् सद्भावं शोभनभावमागतः स सुग्रीवं प्रोचे किमित्याह अभिजानासि स्मरसि एकस्यां मातरि सम्भविष्यावः समभवावइत्यस्मिन्नर्थे अभिज्ञावचने लृडित्यनद्यतने लृट् अभिजानासीत्यभिज्ञावचनस्योपपदत्वात् ॥१३८॥

म्रियेत्यादि। म्रियमाणः सन् सद्भावं प्राप्तोवाली सुग्रीवं प्रोचे ब्रूञ्ष्ठी वचोऽरे म्रुङ्प्टोध्वेममिति शानः तौदादिकः शः रिङ्: अधोरितीयः किमित्याह एकस्यां मातरि आवां यत्सम्भविष्यावः सम्भूतौ तदभिजानासि स्मर्यैस्त्यदिलतीतइति भूते तौ॥ १३८॥

अवसाव नगेन्द्रेषु यत्पास्यावो मधूनि च। अभिजानीहि तत्सर्व्वं बन्धूनां समयो ह्ययं॥१३९॥

अवेत्यादि। अभिजानीहि स्मर यन्नगेन्द्रेषु अवसाव उषितवन्तौ अत्राभिज्ञावचनस्य यच्छब्दसहितत्वात् न यदीत्यनेन लृटि प्रतिषिद्धे लङेव भवति अत्र वासमात्रं स्मर्य्यते मधूनि च यत्पास्यावः तच पीतवन्तौ तत्सर्व्वमभिजानीहि अत्र विभाषासाकाङ्क्ष इति पचे लृट् साकाङ्क्षता च प्रयोक्तुर्लक्ष्यलक्षणयोः सम्बन्धे तत्र वासो लक्षणं पानञ्च लक्ष्यमिति यस्माद्बन्धूनामयमेव समयः कालः॥ १३९॥

अवेत्यादि। नगेन्द्रेषु पर्व्वतश्रेष्ठेषु आवां अवसाव यत्र तत्र मधूनि पास्यावः पीतवन्तौ तत्सर्व्वं अभिजानीहि स्मर यस्मात् अयं बन्धूनां समयः नेदानीं वैरचिन्ता युक्तेति भावः वा नेकस्मार्य्य इति भूते विभाषया तौ वर्त्तमानिवाचे घौ॥ १३९॥

दैवं न विदधे नूनं युगपत्सुखमावयोः। शश्वद्बभूव तद्दुःखं यतोऽन इतिह्याकरोत्॥१४०॥

दैवमित्यादि। नूनमवश्यं दैवमावयोः सुखं युगपदेककालं न विदधे न हि विहितवत् परोक्षे लिट् ञित्वात्तङ् आतो लोपः यतो यस्मात्तत् दैवं शश्वत् नित्यं दुःखमननुकूलं नोऽस्माकं बभूव तस्मादितिह एवमकरोत् इदत्येवं कृतवान् यद्युगपदावयोः

सुखविधानं तद्दुःखं शश्वदभूव ह्याकरोदिति भूतानद्यतनप रोक्षे लिटि शाश्वद्ययतोर्लङ्केति लङ् चकारात् लिट् तत्र शश्व च्छब्दे उपपदे लिडुदाहृतः न लङ् हशब्दे लङेव न लिडपीति ॥ १४० ॥

दैवमित्यादि। नूनं निश्चितं दैवं कर्त्तृ युगपदेकदा नावयोः सुखं विदधे चकार धाञश्छन्दसि लुङ्लङ्लिट इत्यादिना आलोपः यत स्माद्दैवं नोऽस्माकं शश्वन्नित्यं दुःखं प्रतिकूलं बभूव तस्मादिति प्रागुक्तं युगपत् सुखाभावं अकरोत् ह विषादे ह पादपूरणे वा पारम्पर्य्यप्रसिद्धौ स्यादैतिह्यमिति हाव्ययमिति दर्शनात् पारम्पर्य्यप्रसिद्धिमकरोदिति केचित् इति लोकापवादागमयोरिति वर्द्धमानवचनात् लोकापवादं भ्रातृवधूगमनरूपमकरोदिति केचित यत्तदोः परस्पराकाङ्क्षया तत इति गम्यते ॥ १४० ॥

दधौ सदयितां भ्रात्रे मालाञ्चाग्र्यां हिरण्मयीं।
राज्यं सन्दिश्य भोगांश्च ममार व्रणपीडितः ॥ १४१ ॥

ददावित्यादि। सवाली दयितां ताराख्यां भ्रात्रे सुग्रीवाय ददौ मालां चाग्र्यां श्रेष्ठां हिरण्मयीं सुवर्णघटितां राज्यं स्वामात्यादिद्रव्यप्रकृतिं सन्दिश्य दत्वा भोगांश्च राज्याङ्गानि ममार व्रणपीडितः तत्रापि परोक्षे लिट् ॥ १४१ ॥

ददावित्यादि। सवाली भ्रात्रे सुग्रीवाय दयितां स्वप्रियां हिरण्मयीं स्वर्णमयीं स्वर्णघटितां मालाञ्च ददौ अग्र्यां श्रेष्ठामित्युभयविशेषणं हिरण्यस्य विकारो हिरण्मय इति निपातनात्

मयट् यस्तापस्य तत्तिराख्यं भोगांश्च बन्दिश्च दत्वा अणपीडितः सन् ममार मृतः॥ १४१॥

तस्य निर्व्वर्त्त्य कर्त्तव्यं सुग्रीवो राघवाज्ञया। किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतं॥ १४२॥

तस्येत्यादि। तस्य मृतस्य कर्त्तव्यं पिण्डोदकादिकरणीयं कृत्वा सुग्रीवो राघवाज्ञया गच्छ वर्षासमयमतीत्य शरदागमिष्यसीति आज्ञया किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे कृतवान् अत्रापि परोक्षे लिट्॥ १४२॥

तस्येत्यादि। तस्य मृतस्य वालिनः कर्त्तव्यं कर्त्तुमुचितं पिण्डोदकदानादि निर्व्वर्त्य अङ्गदद्वारा स्वयञ्च यथायोग्यं निष्पाद्य राघवस्याज्ञया किष्किन्ध्यानाम्नीमद्रिगुहां द्रुतं शीघ्रं गन्तुं मनः प्रणिदधे चकार धात्वर्थो प्रायश्चेणरति एवं किष्किन्ध्याद्रिगुहेति सुमेरुपर्व्वतादिवत् एकार्थत्वे कर्म्मधारयः॥ १४२॥

नामयाद्यं कपिभिरशनैः स्तूयमानः समन्तादन्वभावं रघुवृषभयोर्व्वानरेन्द्रो विराजन्। अभ्यर्णेऽम्भःपतनसमये पर्णलीभूतसानुं किष्किन्ध्याद्रिं न्यविशत मधुक्षीवगुञ्जद्द्विरेफं॥ १४३॥

इति भट्टिकाव्ये वालिवधोनामाधिकारकाण्डे षष्ठः सर्गः।

नामेत्यादि। वानरेन्द्रः सुग्रीवः किष्किन्ध्याद्रिं न्यविशत निविष्टवान् नेर्विशइति तङ् अशनैः सुष्ठु कपिभिस्तूयमानः वर्त्तमाने लट् तस्य कर्म्मणि विहितत्वात् लक्षणहेत्वोःक्रियायाइति शानच् नामग्राहं नाम गृहीत्वा नाम्न्यादिशिग्रहोरिति णमुल् समन्तात् सर्व्वतः विराजन् शोभमानः अत्र परस्मैपदसंज्ञकः शतृः किं कृत्वा रघुवृषभयोरन्वग्भावं अनुकूलोभूत्वा अन्वक् पूर्व्वाद्भवतेरन्यथा बुद्धोन्यइति णमुल् तदनुकूलवर्त्तित्वाद्विराजन् कदा न्यविशत अभ्यर्णे निकटे अम्भःपतनसमये प्रावृषीत्यर्थः पर्णलीभूतसानुं पर्णानि सन्ति येषामिति सिध्मादिपाठाल्लच् तदन्तादभूततद्भावे च्विः पर्णलीभूताः सानवएकदेशायस्याद्रेः मधुजीवामधुमत्ता गुञ्जन्तोद्विरेफायत्र जीवइत्यत्रानुपसर्गात्फुल्लक्षीवकृशोल्लाघा इति निपातितः जीवृमदइत्यस्मात् क्तप्रत्ययस्य लोपः इडभावश्च निपात्यते गुञ्जेर्लट् कचित्प्रथमासमानाधिकरणेऽपि शतृप्रत्ययः। इति सोपपदकृतः॥ १४२॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे प्रथमः परिच्छेदः। रामस्य सुग्रीवाभिषेकोनाम षष्ठः सर्गः॥

नामेत्यादि। वानरेन्द्रः सुग्रीवः किष्किन्ध्यया गुहाविशेषेणोपलक्षितमद्रिं न्यविशत प्रविष्टवान् शोविशप्रवेशे विपराजीति सं कीदृशः अशनैरुच्चैः समन्तात् सर्व्वतोनामग्राहं नाम गृहीत्वा कपिभिः स्तूयमानः कर्म्मणि शानः रतनोरिति यक् घोऽन्त्यऽरे रघुवृषभयोरामलक्ष्मणयोः अन्वग्भावं अनुकूलोभूत्वा विराजमानः उत्तरपदे वृषभादिशब्दः श्रेष्ठवाचकः स्वभावात् राम

कार्य्यं त्यक्त्वा कुतो गृहं गत इत्याह अम्भःपतनसमये वर्षाकाले अभ्यर्णे समीपवर्त्तिनि सति तदा प्रयाणानौचित्यात् तयोराश्या गृहं गत इत्यर्थः अभ्यर्णइति अर्द्देः क्तान्तस्य समीपार्थे सुब्धवा ढेत्यादिना निपातः कीदृशमद्रिं पल्वलीभूताः सानवएकदेशाय स्य यादृशं वेशन्तः पल्वलञ्चाल्पसर इत्यमरः च्विः कृभ्वस्तिखति च्विः अकारस्य ईत्वञ्च मधुना चीवामत्तीगुञ्जन्तोद्विरेफाभ्रमरा यच चीवृङ् दर्पे इत्यस्य क्तान्तस्य चीवः पूर्व्वेण निपातितः नाम याद्यमिति कर्म्मरूपं नाम आदिश्यिग्रहिभ्यां चणमिति परः खम तेऽभिधानात् किम्वा नामोयाहोयहणं यत्रेति स्तुतिक्रियाविशे षणं अन्वग्भावमिति आनुकूल्येऽन्वचोभुवश्चणमिति परः खमते ऽचाप्यभिधानात् यद्वा रघुवृषभविषये अनुगतोभावोयत्रेति दीप्तिक्रियाविशेषणं एतेन विनयित्वं दर्शितं। इति सोपपदकृद धिकारः॥१४३॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभ रतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डे प्रथमपरिच्छेदः। काव्यस्य षष्ठः सर्गः॥

ततः कर्त्ता वनाकम्पं ववौ वर्षाप्रभञ्जनः। नभः पूरयितारश्च समुन्नेमुः पयोधराः॥१॥

इतस्ताच्छीलिकं कृतमधिकृत्योच्यते ताच्छीलिकइत्युपलक्षणं तद्धर्म्मतत्साधुकारिष्वपि द्रष्टव्यं यतश्चाक्वेस्तच्छीलतद्धर्म्मतत्साधु कारिष्विति तत्राधिक्रियते। ततइत्यादि ततः प्रवेशानन्तरं

वर्षाप्रभञ्जनः प्राट्भवातोऽववौ वाति स्म वागतिगन्धनयोरिति कर्त्ता वनाकम्पं साधु कुर्व्वन् टन्निति टन् नलोकेति षष्ठीप्रतिषेधः पयोधरामेघाश्च समुन्नेमुः समुन्नताः कीदृशाश्च नभः पूरयितारः टन्॥ १ ॥

अथ ताच्छीलिकाः कृतउच्यन्ते। ताच्छीलिकादित्युपलक्षणं परमते तच्छीलतद्धर्म्मतत्साधुकारिष्वर्थेषु टनादिदर्शनात् स्वमते यद्यपि टनादीष्णादिविधायकसूत्रेषु तच्छीलाद्यर्थोनोक्तस्तथापि ढघेक्तीत्यादौ शीलार्थटन्भव्यर्णार्थणिनीति ज्ञापकात् टन्निष्णादयः कतिचित्प्रत्यया अभिधानात् शीलाद्यर्थेष्वपि भवन्तीति बोध्यं उक्तं हि कृत्तद्धितसमासानामभिधानं नियामकमिति शीलाद्यर्थाकथनेऽपि नाधिका क्षतिः प्रकृतार्थस्य तद्बोधकत्वात् तथा हि ततः कर्त्ता वनाकम्पमित्यादौ वनस्य ईषत्कम्पकारित्वेनैव वायोः साधुत्वं गम्यते एवमन्यत्रापि। ततइत्यादि ततोऽनन्तरं वर्षाकालसम्बन्धी प्रभञ्जनोवायुर्व्ववौ वहति स्म वागगमनहिंसयोः णवातोऽडौ कीदृशः वनानामीषत्कम्पनं कर्त्ता साधु कुर्व्वन् एतेन मान्द्यं सौगन्ध्यञ्च परमते साधुकारिणि टन् स्वमते ईषत्कम्पकारित्वेनैव साधुत्वं गम्यते टक्कौघे इति टन् ढघेक्तीत्यादौ शीलार्थटन्निति शीलार्थइत्युपलक्षणं तेन तत्साधुकार्य्यस्यापि ग्रहणं शीलार्थटन्नित्यत्र शीलाद्यर्थटन्निति पाठं केचिदिच्छन्ति किम्वा शीलार्थे टन् वनानामीषत्कम्पकरणशीलइत्यर्थः अतएव कर्म्मणि न षष्ठी वर्षासु वायोरतिशयत्वं वर्णनीयमिति सम्प्रदायानुरोधात् वनानामाकम्पं कर्त्तेति केचित् पयोधरा

मेघाः समुन्नेमुः सम्यगुन्नताः परिवृद्धा बभूवुः दिशो व्याप्तवन्त इत्य र्थः नमेरुषि तृफलीत्यादिना अतएतं खिलोपश्च पयोधरतीति पचादित्वादन् पयोधरतीति वाक्ये क्वात्प्रमित्यस्य विषयाशङ्का चेत् तदा धरतीति धरः पयसोधरः पयोधर इति वाक्यं कीदृशाः नभश्चाकाशं पूरयितारः पूरणशीलाः पूरकपूर्णौ पूर्व्ववत्॥१॥

तर्पणं प्रजनिष्णूनां शस्यानाममलं पयः। रोचि ष्णवः सविस्फूर्ज्जामुमुचुर्भिन्नवद्घनाः॥२॥

तर्पेत्यादि। घनाश्चमलं पयो मुमुचुः भिन्नवत् भिन्नाइव कीदृशं पयः तर्पणं शस्यानां तर्पणं तर्पयतीति कृत्यल्युटोबहुल मिति कर्त्तरि ल्युट् प्रजनिष्णूनां साधु प्रादुर्भवतां रोचिष्णवः साधु दीप्यमानाः सविस्फूर्जाः सवज्रनिस्वनाः अलंकृञित्यादिना इष्णुच्॥२॥

तर्पेत्यादि। घनानिर्म्मलं पयोमुमुचुः त्यक्तवन्तः भिन्नवत् भग्ना इव यथा घटादयोभग्नाः सन्तोवऊजलं त्यजन्ति तद्वत् कीदृशं पयः प्रजनिष्णूनां प्रकृष्टजननशीलानां साधु प्रादुर्भवतां वा श स्यानां तर्पणं तृप्तिकारकं तर्पयतीति नन्द्यादित्वादनः परमते ऽत्रापि शीलार्थः कुकविकाव्यमिव नीरसस्य रमणीयमिति देश वर्णनायां श्लेषात् सस्यशब्दोदन्त्यदयवानित्येके तालव्याअपि दन्त्याः स्युः शस्यशूकरशालयइत्यन्ये घनाः कीदृशाः रोचि ष्णवोदीप्तिशीलाः साधु दीप्यमानावा सविस्फूर्ज्जावज्रनिर्घोष

सहिताः ञिभ्राजभूसहेत्यादिना प्रपूर्व्वजनेरुचश्च इष्णुः ह्रोस्फूर्ज्जावज्रनिर्घोषे सेमकाम्बरोरिति श्रः ॥ २ ॥

निराकरिष्णवोभानुं दिवं वर्त्तिष्णवोऽभितः। अलङ्करिष्णवोभान्तस्तडित्वन्तश्चरिष्णवः ॥ ३ ॥

निरेत्यादि। भानुं निराकरिष्णवो निराकरणशीलाघनाः पयोमुमुचुरिति योज्यं दिवमभितोवर्त्तिष्णवआकाशमभितो वर्त्तनस्वभावाः पूर्व्वपश्चिमयोर्व्वर्त्तनहेतुत्वात् पर्य्यभिभ्यां सर्वोभयार्थे तसिः अभितः परितइति द्वितीया तडित्वन्तः सविद्युतः अत एव भान्तोदीप्यमानाः एवञ्च कृत्वा अलङ्करिष्णवोऽलङ्करणशीलाइव दिशश्चरिष्णवः इतस्ततोगमनशीलाः पूर्व्ववदिष्णुच् ॥ ३ ॥

निरेत्यादि। कीदृशाघनाः भानुं निराकरिष्णवआच्छादकाइत्यर्थः दिवमभितआकाशस्योभयभागे पूर्व्वे पश्चिमे च वर्त्तनशीलाः धिक्समयेत्यादिना अभियोगे द्वितीया तडित्वन्तोविद्युद्युक्ताः अतएव भान्तोदीप्यमानाः एवञ्चालङ्करिष्णवोदिवमिति सम्बध्यते साधु भूषयन्तः चरिष्णवः इतस्ततोगमनशीलाः पूर्व्वेण इष्णुः ढघेकृतीत्यादौ उदन्तवर्ज्जनात् न कर्म्मणि षष्ठी तडिच्छब्दात् मोऽम्भसोपादतुः नदंतसाविति पदनिषेधात् न चपोऽवेजवदित्यनेन नकारस्य दलं यद्यपि तडित्वान् वारिदोऽम्बुभृदित्यमरेणोक्तं तथाप्यत्र विद्यमानतडिद्योगप्रतिपत्त्यर्थमुक्तं

अथ तु गोशब्दादिवद्रूढिरेव यदा तडित्वन्तो मेघाः पयोमुमुचुः कीदृशाः घनानिविडाः ॥ ३ ॥

तान् विलोक्यासहिष्णुः सन् विललापोन्मदिष्णुवत्।
वसन् माल्यवति ग्लास्नूरामोजिष्णुरधृष्णुवत् ॥ ४ ॥

तानित्यादि। तान् घनान्विलोक्य असहिष्णुरसहनशीलो रामः माल्यवति पर्व्वते वसन्विललाप उन्मदिष्णुवत् उन्मदनशीलः उन्मत्तस्तद्वत् पूर्व्ववदिष्णुच् ग्लास्नुः ग्लानशीलः जिष्णुर्जयशीलः अधृष्णुवदप्रगल्भइव शोकाभिभूतत्वात् ग्लाजिस्थश्चग्स्नुः धृष्णुरिति त्रसिगृधीत्यादिना क्नुः ॥ ४ ॥

तानित्यादि। तान् घनान् विलोक्य असहिष्णुः सन् अक्षमाशीलोभवन् रामो माल्यवति पर्व्वते वसन् उन्मदिष्णुवदुन्मत्तवत् विललाप विलापं कृतवान् सन् पण्डितोऽपि उन्मदिष्णुरिव विललापेति वा योजना जिष्णुर्ज्जयशीलोऽपि अधृष्णुवत् अप्रगल्भइव ग्लास्नुः ग्लानिशीलः सहोन्मदिभ्यां पूर्व्वेण इष्णुः ग्लाग्लास्थेत्यादिना ग्लायतेः स्नुः ग्स्नुक्भूजेरिति जयतेः ग्स्नुक् त्रिपत्रसगृधेत्यादिना धृषः क्नुः ॥ ४ ॥

अमी कदम्बसंभिन्नः पवनः शमिनामपि। क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः ॥ ५ ॥

किं तद्विलपनमित्याह भ्रमीत्यादि। भ्रमी भ्रमणशीलः कदम्ब सम्भिन्नः कदम्बगन्धसंश्लिष्टः शमिनामपि श्रमनशीलानामपि क्लमित्वं कुरुते अत्यर्थं ग्लानिं कुरुते शमित्यष्टाभ्योघिनुण् नोदा त्तोपदेशेत्यादिना उपधावृद्धिप्रतिषेधः॥ ५॥

भ्रमीत्यादि। इतःप्रभृति एवं विललापेति पूर्व्वेण सम्बन्धः पवनः शमिनां शान्तिशीलानामपि क्लमित्वं मनसोग्लानिशी लत्वं कामहेतुकमित्यर्थात् अत्यर्थं अतिशयितं कुरुते कीदृशः भ्रमी भ्रमणशीलः मन्दत्वात् कदम्बपुष्पेण सम्भिन्नः सुरभीकृत इ त्यर्थः मेघस्य शीकरैः शीतलः शीकरोऽम्बुकणाः स्मृताइत्यमरः भ्रम्यचाले शमुभ्यदर्शमे क्लमुभिर्म्लानौ एभ्योयशादित्वात् घिन् अनवधःसेमइति ह्रस्वः॥ ५॥

संज्वारिणेव मनसा ध्वान्तमायासिना मया। द्रोहि खद्योतसम्पर्कि नयनामोषि दुःसहं॥ ६॥

संज्वेत्यादि। मयैतत् ध्वान्तं तमो दुःसहं दुःखेन सह्यतइति मनसा करणभूतेन कीदृशेन संज्वारिणेव रोगशीलेनेव आयासि ना आयासशीलेन मयेति द्रोहि अपकारशीलं ध्वान्तं खद्योत सम्पर्कि ज्योतिरिङ्गणसंसर्गशीलं नयनामोषि चक्षुर्मोषणशीलं संपृचानुरुधेत्यादिना सर्व्वे घिनुणन्ताः॥ ६॥

संज्वेत्यादि। मया मनसा करणेन ध्वान्तं तमोदुःसहं दुःखेन सह्यते संज्वारिणेव रोगशीलेनेव आयासशीलेन ध्वान्तं कुतोदुः सहं इत्याह द्रोहि अपकारशीलं खद्योतसम्पर्कि ज्योतिरिङ्गणसं

सर्गशीलं नयनामोषि नेत्रापहारकं अर्म्मरोगेर्द्दर्यसुयतने स्पृद्धु छाभिघाते सचृधीचसंपर्के मुषलुटने एभ्योयहादित्वात् णिन् ष्टचः काङ् निपातात् एभ्योघञन्तेभ्योऽस्त्यर्थे इन् वा ॥ ६ ॥

कुर्व्वन्ति परिसारिण्योविद्युतः परिदेविनं। अभ्याघा तिभिरामिश्रास्चातकैः परिराटिभिः ॥ ७ ॥

कुर्व्वन्तीत्यादि। एताविद्युतः परिदेविनं परिदेवनशीलं कुर्व्वन्ति मामित्यर्थात् कीदृश्यः परिसारिण्यः परिसरणशीलाः चातकैः पक्षिविशेषैः परिराटिभिः परिरटनशीलैः एवञ्चाभ्या घातिभिः अभिहननशीलैः दुःखोत्पादनात् आमिश्रायुक्ताः विद्यु तः पूर्व्ववद्विनुण् ॥ ७ ॥

कुर्व्वेत्यादि। विद्युतोऽर्थान्मां परिदेविनं विलापशीलं कुर्व्वन्ति परिसारिण्यः परिसरणशीलाः दुःखोत्पादकतया अभि हननशीलैः परितोरटनशीलैस्चातकैः पक्षिविशेषैर्युक्ताः सृगतौ देवृङ्देवने हनलौगतौ वधे रटवाचि एभ्यो ग्रहादित्वाण्णिन् वि पूर्व्वात् द्योततेः क्विप् विद्युत् ॥ ७ ॥

संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः। सो ढुमाक्रीडिनोऽशक्याः शिखिनः परिवादिनः ॥ ८ ॥

संसर्गीत्यादि। संसर्गी संसर्जनशीलः शीतोऽपि शीकरोबिन्दुः परिदाहीव परिदहनशीलइवाभाति शिखिनस्च मयूराः सोढुम

शक्या: आक्रीडिनोनर्त्तनशीला: परिवादिन: परिवदनशीला इव इवशब्दस्याच लुप्तोद्दृष्टव्य: पूर्व्ववद्धिनुण् ॥ ८ ॥

संसेत्यादि। शीकर: शीतोऽपि संसर्गसाधुकारी अपि सन् परिदहनशीलइव आभाति शिखिनोमयूरा: सोढुमशक्या: कीदृशा: आक्रीडनशीला: परि सर्व्वतोवदनशीला: साधुभाषिणोवा रञ्जोऽपघकामाषञ्चिनाविति ज्ञापकात् क्वचित् घिन् प्रत्ययोऽप्यस्तीति प्राप्तं तेन सूत्रेघ्निनि चजो:कगाविति गत्व घञन्तादस्त्यर्थे इन् वा इहिक्रीडवदिभ्योघञादित्वात् णिन् ॥ ८ ॥

एतादैवानुरोधिन्योद्वेषिण्यइव रागिणं। पीडयन्ति जनं धारा: पतन्त्योऽनपकारिणं ॥ ९ ॥

एतादित्यादि। एताधारा: पतन्त्योद्वेषिण्यइव द्वेषणशीलाइव जनं रागिणं रागशीलं अनपकारिणमनपराधशीलं पीडयन्ति दैवानुरोधिन्य: भाग्यानुरोधात् प्रवर्त्तनशीला: पूर्व्ववत् घिनुण् घिनुणि च रञ्जेरुपसंख्यानमित्यनुनासिकलोप: क्वताननुनासिकनिर्द्देशाद्वा लोपनिपातनं ॥ ९ ॥

एतादित्यादि। एता: पतन्त्योधारा: द्वेषशीलाइव अनपकारशीलमपि जनं पीडयन्ति दैवानुरोधात् प्रवर्त्तनशीला: रुधदिषक्रभ्योग्रहादित्वात् णिन् रञ्जे: संसर्गिवत् घिनि रञ्जोऽपघकेति नलोप: घञन्तनिष्पादितरागशब्दात् इन् वा ॥ ९ ॥

कुर्य्याद्योगिनमप्येष स्फूर्जावान् परिमोहिनं। त्यागिनं सुखदु:खस्य परिक्षेप्यम्भसाम्तु: ॥ १० ॥

कुर्य्यादित्यादि। एषश्चतुरम्बुधीनां जलानां परिक्षेपी परित्यजनशीलः कर्म्मणि षष्ठी योगिनमपि योगशीलमपि सुखदुःखस्य त्यागिनं त्यागशीलं कर्म्मणि षष्ठी परिमोहिनं परिमोहनशीलं कुर्य्यात् कीदृशः स्फूर्जावान् वज्रनिर्घोषयुक्तः पूर्व्ववद्विनुण् ॥१०॥

कुर्य्यादित्यादि। एषोऽम्बुधीनां परिक्षेपी परित्यागशीलश्चतुर्य्योगिनं शास्त्रविधिना योगे साधुकारिणमपि सुखदुःखस्य त्यागशीलमपि परि सर्व्वतोमोहशीलं कुर्य्यात् यतः स्फूर्ज्जावान् वज्रनिर्घोषयुक्तः तेन कामस्य भयस्य चोत्पादात् केचित्तु योगिनं कान्तायुक्तं वज्रनिर्घोषेण सुखत्यागिनं कान्तालिङ्गनेन च दुःखत्यागिनमित्याहुः युजेः संसर्गिवत् घिन् घञन्तादिन् वा मुषिक्षिपिभ्यां यज्ञादित्वाघिन् ॥ १० ॥

विकत्थी याचते प्रत्तमविस्रम्भी मुहुर्ज्जलं। पर्ज्जन्यञ्चातकः पक्षी निक्रन्तन्निव मानसं॥११॥

विकेत्यादि। चातको मानसं निकृन्तन्निव खण्डयन्निव प्रत्तं प्रदत्तं अचउपसर्गात्तः जलं याचतइति प्रधानं कर्म्म पर्ज्जन्यमित्यकथितं विकत्थी विकत्थनशीलइव पर्ज्जन्योऽपि मह्यं जलं ददाति इवशब्दोलुप्तोऽत्र द्रष्टव्यः अविस्रम्भी अविश्वासशीलः मानसखण्डनात् वीकषलसेति घिनुण् ॥ ११ ॥

विकेत्यादि। चातकः पक्षिविशेषोमम मानसं निकृन्तन्निव खण्डयन्निव व्योम्नि मुहुः पुनःपुनः प्रदत्तमपि जलं पर्ज्जन्यं मेघं याचते याचिद्विकर्म्मकः यतोऽविस्रम्भी अविश्वासशीलः तृषाद्या

कुशलात् प्राप्तेऽपि जले जलं याचत इत्यर्थः विकत्थी श्लाघाशीलः कत्थङ् श्लाघे स्नुक्विश्वासे इत्यादिः आभ्यां ग्रहादित्वात् णिन् प्रपूर्व्वस्य दाञोग्यचस्त्वेति तादेशः पृथुसेके इत्यस्यान्यप्रत्यये चव र्गश्चतीयोनिपातश्चौणादिकइत्यर्ज्जुनदत्तः हतीयपक्षिदि सुचा दित्वात् नुणरधोमुचामिति नुण्॥ ११॥

प्रलापिनोभविष्यन्ति कदा न्वेतेऽपलाषिणः। प्रमाथिनोवियुक्तानां हिंसकाः पापदर्दुराः॥ १२।

प्रलापीत्यादि। एते पापदर्दुराः पापाश्च ते दर्दुराश्चेत्याक्रोशाभिधानं कदा नु अपलाषिणोभविष्यन्ति अपलषणशीलाः व्यपगतकामा इत्यर्थः लषकान्तौ अपेचलषइति घिनुण् प्रलापिनः प्रलपनशीलाः प्रमाथिनः प्रमथनशीलाःचैतषामित्यर्थात् प्रेलपेत्यादिना घिनुण् अतएव वियुक्तानां मादृशां हिंसकाः हिंसनशीलाः इत्येवं विललाप निंदहिंसेत्यादिना वुञ्॥ १२॥

प्रलेत्यादि। एते पापदर्दुराः पापिनोभेकाः कदा अपलषणशीलाः व्यपेतकामाभविष्यन्ति तदैव तत्प्रलापनिवृत्त्या दुःखानुत्पत्तिः पापशब्दश्चाक्रोशपूर्व्वककुत्साद्योतनाय प्रयुक्तः प्रलापकरणशीलाः प्रलापोऽनर्थकं वचः वियुक्तानां भार्य्याविरहिणां प्रमाथिनः साधुप्रमथनकारिणः यतोहिंसकाः हिंसाशीलाः लपलषमथिभ्योग्रहादित्वात् णिन् हिंसेः तृषकौ घे इति णकः एवं विललापेति सम्बन्धनीयमेतत्पर्य्यन्तं॥ १२॥

निन्दकोरजनिम्मन्यं दिवसं क्लेशकोनिशां। प्रावृष्यनैषीत् काकुत्स्थः कथञ्चित्परिदेवकः ॥१३॥

निन्देत्यादि। काकुत्स्थोदिवसं रजनिम्मन्यं रजनीमात्मानं मन्यमानं घनान्धकारित्वात् आत्ममानेखश् खित्यनव्ययस्येति ह्रस्वत्वं निशाञ्च प्रावृषि कथमप्यनैषीत् नीतवान् निन्दकः निन्दनशीलः नक्तंदिनस्येत्यर्थात् क्लेशकः क्लेशनशीलः परिदेवकः परिदेवनशीलः आत्मनइत्यर्थात् ॥१३॥

निन्देत्यादि। काकुत्स्थः प्रावृषि वर्षाकाले कथञ्चित् कथमपि दिवसं निशाञ्च अनैषीत् गमयामास कीदृशः निन्दकः निन्दाशीलः अर्थादात्मनः दिनरात्र्योर्वा दिवसं निशाञ्च निन्दकइति ये वदन्ति तन्मते ढघेक्तीत्यादौ शीलार्थत्वन्नित्यत्व त्वन्नित्युपलक्षणं शीलार्थे एकस्यापि ग्रहणं तेन न षष्ठी क्लेशकः क्लेशशीलः परिदेवकः साधु देवनकारी सन् दिवसं कीदृशं रजनिम्मन्यं आत्मानं रजनिं रात्रिं मन्यमानं तत्तुल्यमिति यावत् घनान्धकारात् णिदिक्लिशिदेविभ्यः त्वखकोघे इति एकः ॥१३॥

अथोपशरदेऽपश्यत् क्रौञ्चानाञ्चेष्टनैः कुलैः। उत्कण्ठावर्द्धनैः शुभ्रं रवणैरम्बरं ततं ॥१४॥

अथेत्यादि। अथानन्तरमुपशरदे शरत्समीपइत्यव्ययीभावे शरत्प्रभृतिभ्यइति समासान्तष्टच् तृतीयासप्तम्योर्बहुलमित्यमभावः क्रौञ्चानां कुलैस्ततं व्याप्तमम्बरं शुभ्रं शुक्लमपश्यत् दृष्टवान्

चेष्टनैः आपारशीलैः रवणैः शब्दनशीलैः अनयोश्चलनशब्दार्थत्वात् चलनशब्देत्यादिना युच् उत्कण्ठावर्द्धनैः उत्कण्ठावर्द्धनशीलैः अनुदात्तेतश्चेति युच् क्रौञ्चा इति क्विप्प्रत्ययान्तत्वात् प्रज्ञादित्वादण्॥ १४ ॥

अथेत्यादि। अथानन्तरं उपशरदे शरत्कालस्य समीपे काकुत्स्थोऽम्बरमाकाशमपश्यत् कीदृशं क्रौञ्चानां पक्षिविशेषाणां कुलैः समूहैः ततं व्याप्तं अतएव शुभ्रं धवलं कीदृशैश्चेष्टनैः साधुचेष्टां कुर्व्वद्भिः उत्कण्ठायाभार्य्याविषयिकायावर्द्धनैः वृद्धिशीलैः साधूत्कण्ठावृद्धिकारिभिर्वा रवणैः साधुशब्दं कुर्व्वद्भिः चेष्टवृधिरुभ्योनन्द्यादित्वादनः वृधिरत्र ण्यन्तः शरदोऽव्ययीभावे शरद्विपाडयइति अः चौशेरार्व्वेति पत्ते मशवृत्तिः क्रुञ्चैव क्रौञ्चः स्वार्थे ष्णः॥ १४ ॥

विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत्।
पश्य दंद्रमणान् हंसानरविन्दसमुत्सुकान्॥ १५॥

विलोक्येत्यादि। चन्द्रं विलोक्य द्योतनं साधुद्योतमानं अनुदात्तेतश्चेति युच् शोचनः शोचनशीलः शुचक्रुधेत्यादिना युच् रामोलक्ष्मणमवदत् पश्य हंसान् दन्द्रमणान् शनैर्द्रमणशीलान् द्रमेर्नित्यं कौटिल्यएव भवति नतु क्रियासमभिहारइत्युक्तं तदन्तात् युच् अतोलोपः यस्यहलः अरविन्दसमुत्सुकान् प्रसितेति सप्तमीं विधाय सप्तमीति योगविभागात्सः॥ १५ ॥

विलोक्येत्यादि । चन्द्रं विलोक्य रामोलक्ष्मणमब्रवीत् चन्द्रं कीदृशं शीतलं शीतमानं शोचनः शोकशीलोरामः किमुक्तवानि त्याह हंसान् त्वं पश्य कीदृशान् दंद्रमणान् कुटिलगमनशीलान् अरविन्देषु पद्मेषु समुत्सुकान् युतश्रुचयजपजुगमन्दूमिभ्योनन्द्या दिलादनः विपरीतदिशां देशानां गमनमिह वक्रं ॥ १५ ॥

कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्द्धनः । कुर्व्वन्ति कोपनं तारा मण्डनं गगणस्य मां ॥ १६ ॥

कपिरित्यादि । नासौ कपिः सुग्रीवोऽद्यापि चङ्क्रमणः शनैर्गमनशीलो न भवति यतोगर्द्धनोऽभिलाषशीलः स्त्रीष्वित्यर्थात् पूर्व्ववयुच् ताराश्च मां कोपनं कोपनशीलं तद्विषयएव कुर्व्वन्ति कीदृश्यः गगणस्य मण्डनाभूषणाः क्रुधमण्डार्थेभ्यश्चेति युच् ॥ १६ ॥

कपिरित्यादि । असौ कपिः सुग्रीवोऽद्यापि कुटिलगतिशीलो न भवति नाना दिक्षु गमनं न करोतीत्यर्थः यतोगर्द्धनः अभिलाषशीलः अर्थाद्भोगेषु तारामां कोपनं कोपशीलं कुर्व्वन्ति तद्विषयइत्यर्थात् कीदृश्यः गगणस्य मण्डनं साधुभूषाकारिण्यः यङ्लुगन्तक्रमेर्गृधुकुपमण्डिभ्यश्च नन्द्यादिलादनः वेदाः प्रमाणमित्यादिवत्सामान्योपक्रमान्मण्डनस्य क्लीवत्वमेकत्वञ्च किम्वा मामित्यस्य विशेषणं आकाशवासित्वाद्गगणभूषणं मामित्यर्थः अहमाकाशवासी सोऽद्यापि गृहे तिष्ठतीति कोपहेतुः ॥ १६ ॥

नावैत्याप्यायितारं किं कमलानि रविं कपिः।
दीपितारं दिनारम्भे निरस्तध्वान्तसञ्चयं ॥१७॥

नावैत्येत्यादि। किमसौ कपिः रविं नावैति नावगच्छति कमला न्याप्यायितारं साधु वर्द्धयन्तं अनुदात्तेतश्चेति प्राप्ते नयइति प्रतिषिद्धे तृन्नेव भवति ततश्च नलोकेति षष्ठीप्रतिषेधः दिनारम्भे दीपितारं साधु दीप्यमानं पूर्व्ववद्युचि प्राप्ते सूददीपदीचेति प्रतिषेधः निरस्तध्वान्तसञ्चयं अपनीतान्धकारसंहतिकं किमसौ शरत्समयं नावैतीत्यर्थः ॥१७॥

नावैत्येत्यादि। किमसौ कपिरीदृशं सूर्य्यं नावैति शरत्कालसमागतं किं न जानातीत्यर्थः कीदृशं रविं कमलानि आप्यायितारं पद्मवृद्धिं साधु कुर्व्वन्तं दिनारम्भे दीपितारं साधु दीप्यमानं अपनीतान्धकारसमूहं प्यायिदीपिभ्यां तृणकौ घेदति तृन् छघेक्तीत्यादौ शीलार्थस्योपलक्षणत्वान्न कर्म्मणि षष्ठी क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति वा द्वितीया ॥१७॥

अतीते वर्षुके काले प्रमत्तः स्थायुकोगृहे। गामुकोध्रुवमध्वानं सुग्रीवोवालिना गतं ॥१८॥

अतीत्यादि। वर्षुके वर्षणशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः शरदि मागतत्वात् प्रमत्तः सन् सुग्रीवोवालिना गतं अध्वानं प्राप्तमार्गं ध्रुवमवश्यं गामुकः साधु गन्ता लषपतेत्युकञ् नलोकेति षष्ठीप्रतिषेधः ॥१८॥

अतीत्यादि। असौ सुग्रीवो वालिना गतमध्वानं यममार्गं ध्रुवं निश्चितं गामुकः साधु गमिष्यति यतः वर्षुके वृष्टिशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः अतएव प्रमत्तः अनवहितः वृषस्यागमिष्यः मृषाभूकमेति उकः इषेकतीत्यादौ उकवर्ज्जनाम कर्म्मणि षष्ठी॥ १८॥

जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया।
गत्वा लक्ष्मण वक्तव्यो जयिना निष्ठुरं वचः॥ १९॥

जल्पेत्यादि। हे लक्ष्मण त्वया प्रजविना प्रकृष्टगमनशीलेन प्रजोरिनिः जयिना अभिभवनशीलेन जिदृक्षीत्यादिना इनिः सुग्रीवो निष्ठुरं वचोऽभिधातव्यः जल्पाकीभिः जल्पनशीलाभिः स्त्रीभिः सहासीनः जल्पभिक्षेति षाकन् षित्वात् ङीष् तन्मध्ये हि परुषमभिधीयमानः परिभवं मन्यत इति भावः॥ १९॥

जल्पेत्यादि। हे लक्ष्मण त्वया गत्वा सुग्रीवो निष्ठुरं वचो वक्तव्यः कथनीयः सुग्रीवस्य गौणकर्म्मत्वात् गौणेयाचादय इति तत्रैव प्रत्ययः सुग्रीवः कीदृशः जल्पाकीभिर्ज्जल्पनशीलाभिः साधु जल्पन्तीभिर्व्वा स्त्रीभिः सह आसीनः उपविष्टः भिक्षजल्पकुट्टेति षाकः षित्त्वादीप् यासोऽस्येत्यनेन आसः शानस्य आईत्वं त्वया कीदृशेन प्रजविना प्रकृष्टवेगवता जयिना जययुक्तेन जुजिभ्यामनन्ताभ्यामस्त्यर्थे इन् किम्वा कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेस्तद्धितष्णादिवत् कृत्प्रत्यययोरपि क्वचित् सेतोऽनितस्य

भवन्ति तेन यत्तादित्वात् णिनोणकारेत्वाविवक्षया वृद्ध्यभावे णु घूरुइति गुणः परे तु शीलाचारसाधुषु जुविप्रभृतितइन् वर्त्त मानइत्याहुः॥ १८ ॥

शैले विश्रयिणं क्षिप्रमनादरिणमभ्यमी। न्याय्यं परिभवी ब्रूहि पापमव्यथिनं कपिं॥ २०॥

शैलइत्यादि। कपिं क्षिप्रं गत्वा ब्रूहि इत्यकथितं कर्म्म न्याय्यं वचइति प्रधानं कर्म्म अस्य चातिस्पष्टार्थत्वादिदं तदिति न सन्दिष्टं अनादरिणमनादरशीलं कपिं कालातिक्रमणात् आङ्पूर्व्वाद्दृङ् अतएव पापं दुराचारं अव्यथिनं निर्भयशीलं नञ्पूर्व्वोव्यथिः शैले विश्रयिणं तत्र स्थितिशीलं विपूर्व्वः श्रयतिः त्वं चाभ्यमी अभिमुखगमनशीलः अभिपूर्व्वोऽमगत्यादिषु परिभवी साधु परिभवं जनयन् परिपूर्व्वोभवतिः अत्र सर्व्वत्र जिदृक्षीत्यादिना इनिः॥ २०॥

शैलइत्यादि। त्वं क्षिप्रमभ्यमी शीघ्रमाभिमुख्येन साधु गतः सन् परिभवी साधु परिभवं कुर्व्वन् न्याय्यं न्यायादनपेतं वचस्तं कपिं ब्रूहि कीदृशं कपिं शैले विश्रयिणं स्थितिशीलं अनादरिणं मयि अनादरशीलं पापं दुराचारं यतोऽव्यथिनं निर्दयशीलं श्रिदृश्रमभ्यव्यथानां प्रजविवत् तथा रूपाणि॥ २०॥

स्पृहयालुं कपिं स्तोभ्योनिद्रालुमदयालुवत्। श्रद्धालुं भ्रामरं धारु सङ्गमङ्गो वद द्रुतं॥ २१॥

स्पृहेत्यादि। स्त्रीभ्यः स्पृहयालुं कपिं साधु स्पृहयन्तं स्पृहिः स्वार्थिकण्यन्तोऽदन्तश्च अथामन्तेत्ययादेशः स्पृहेरीप्सितइति सम्प्रदानसंज्ञा द्रुतं वद ब्रूहि अदयालुवत् अदयनशीलइव निद्रालुं निद्राशीलं अस्मत्कार्य्येष्वनवधानत्वात् शयनीयएव सर्व्वदा स्थितत्वात्स्त्रीभिः सह श्रद्धालुं साध्वभिलषन्तं भ्रामरं भ्रमरैः कृतं चुद्राभ्रमरेत्यादिना अञ् मध्वित्यर्थात् नलोकेति षष्ठीप्रतिषेधः स्पृहिगृहीत्यादिना आलुच् श्रद्धालुत्वादेव धारं साधु पिवन्तं भ्रामरमेव सद्रुं साधु सीदन्तं दाधेट्सिशदसदोरुः ॥ २१ ॥

स्पृहेत्यादि। द्रुतं शीघ्रं त्वं कपिं वद विषादे पौनरुक्त्यं न दोषाय अतिदार्ढ्यार्थत्वात् कीदृशं स्त्रीभ्यः स्पृहयालुं स्पृहाशीलं साधु स्पृहयन्तं वा यस्मैदित्सेत्यादिना संप्रदानत्वं अदयावन्तमिव निद्रावन्तं भ्रमरैः कृतं भ्रामरं मधु ढधेकादिति ण्णः तत् धारं साधु पिबन्तं तथापि तत्र श्रद्धालुं अभिलाषवन्तं एतेन पानासक्ततया प्रमत्तत्वं दर्शितं अद्रौ किष्किन्धापर्व्वते सद्रुं साधु सीदन्तं तिष्ठन्तमित्यर्थः एवं रामोलक्ष्मणमब्रवीदिति पूर्व्वेणान्वयः स्पृह ईप्से पतिगृहिस्पृहीति आलुः निद्रादयाश्रद्धाशब्देभ्योगोदण मेधेत्यादिना निद्रादित्वादस्त्यर्थे आलुः निपूर्व्वद्रादयश्रत्पूर्व्व धाञ् इत्येतेभ्यः स्पृहयालुवदालुरिति परे धेट्सदिभ्यां शतसत् सिधेदोरुरिति रुः ॥ २१ ॥

त्वमरोऽभङ्गुरप्रज्ञोगृहीत्वा भासुरं धनुः। विदुरो जित्वरः प्राप लक्ष्मणोगत्वरान् कपीन् ॥ २२ ॥

सृमेत्यादि। लक्ष्मणः कपीन् प्राप कीदृशः सृमरः साधु गन्ता सृघस्यदः क्मरच् भङ्गुरा ये स्वयमेव भज्यन्ते भञ्जभासमिदो घुरच् तान् प्रजानातीति भङ्गुरप्रज्ञ इति कः विदुरः साधु वेदी विदिभिदिछिदेः कुरच् जित्वरः साधु जयशीलः इणनशजीत्यादिना क्वरप् गृहीत्वा धनुर्भासुरं भासनशीलं गत्वरान् गमनशीलान् कपीन् अस्थिरप्रकृतीनित्यर्थः गत्वरश्चेति निपातितं गमेः क्वर अनुनासिकलोपः॥ २२॥

सृमेत्यादि। लक्ष्मणोभासुरं दीप्तिशीलं धनुर्गृहीत्वा गत्वरान् अस्थिरप्रकृतीन् तद्भयात् पलायमानान् वा कपीन् प्राप कीदृशः सृमरः साधु सरति गच्छतीति घसस्रदः क्मरः भङ्गुरान् स्वयमेव भञ्जनशीलान् अर्थात् कपीन् प्रजानातीति इगुपधज्ञाप्रीति कः यद्वा नञः प्रश्लेषात् अभङ्गुरा स्थिरा प्रज्ञा बुद्धिर्यस्य स तथा साधु वेत्तीति विदुरः जित्वरोजयशीलः भञ्जिभासिभ्यां मिङ्गा सभन्जइति घुरः कुङ्गोःकभावइत्युक्तेः कर्त्तरि विहितोऽपि घुरो भञ्जेः कर्म्मकर्त्तरि वोध्यः भज्यते स्वयमेवेति भङ्गुरः चजोःकगाविति गत्वं वेत्तेश्छिद्भिदिदइति कुरः जिगमिभ्यां क्वरप्सृजीनित्यादिना क्वरप् मस्य तस्य स्वाद्यतम्पिति॥ २२॥

तं जागरूकः कार्य्येषु दन्दशूकरिपुं कपिः। अकर्म्मं मारुतिर्दीप्रं नम्रः प्रावेशयद्गुहां॥ २३॥

तमित्यादि। तं लक्ष्मणं कपिर्मारुतिः गुहां प्रावेशयत् विशेर्हेतुमण्णन्तात् लङि रूपं कार्य्येषु कृत्येषु जागरूकः सावधानः

आसक्षकदति जागर्त्तेरूकः दन्दशूकरिपुं हिंस्रारिं यजजपेत्यादिना दंशेर्यङन्तादूकः लुपसदेत्यादिना यङ् दीप्रं साधु दीप्यमानं अकम्प्रं अकम्पनशीलं अभीरुमित्यर्थः नम्रः साधु प्रह्वीभूतः सर्व्वत्र नमिकम्पीत्यादिना रः॥२३॥

तमित्यादि। कपिर्मारुतिर्हनूमान् तं लक्ष्मणं गुहां किष्किन्ध्यां प्रवेशयामास प्रवेशोऽपि गतिभेदः तेन घोभौ सेः शब्दासनगतीत्यादिना प्रयोज्यकर्त्तुः कर्म्मत्वं गुहेति भिदादित्वात् भीषिचिन्तीत्यादिना ङः स्त्रीलक्ष्म कीदृशो मारुतिः कार्य्येषु जागरूकः साधु सावधानः नम्रः साधु प्रह्वीभूतः तं कीदृशं दन्दशूकानां हिंस्राणां रिपुं अकम्प्रं अकम्पनशीलं निर्भयमित्यर्थः दीप्रं दीप्तिशीलं जागृयङन्तदन्शिभ्यां जागृयङन्तयजेत्यादिना ऊकः दन्शोनलोपो वेति यङ्लुकि नस्य लोपः स्मजपेत्यादिना खेर्नुण् कम्पिदीपिणमिभ्यो हिंसदीपेत्यादिना रः॥२३॥

कम्राभिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः। इच्छुः
प्रसादं प्रणमन् सुग्रीवः प्रावदन्नृपं॥२४॥

कम्रेत्यादि। सुग्रीवः प्रावदन्नृपं लक्ष्मणं स्त्रीभिरावृतः परिवृतः सन् प्रणमन् ताभिः सहेत्यर्थः कम्राभिः कमनशीलाभिः पूर्व्ववद्रः आत्मनः क्षेमं कल्याणमाशंसुः प्रार्थयमानः सनाशंसभिक्षउः नलोकेति षष्ठीप्रतिषेधः इच्छुः प्रसादं प्रसादमिषणशीलः अपि मे स्वामी प्रसन्नः स्यादिति विन्दुरिच्छुरिति निपातनं॥२४॥

कमेत्यादि। सुग्रीवो नृपं लक्ष्मणं प्रावदत् कमाभिः कामुकीभिः स्त्रीभिः परिवृतः सन् प्रणमन् अर्थात् ताभिः सह पूर्व्ववत् रः आत्मनः क्षेमं कुशलं आशंसुः इच्छुः सन् भिक्षाशंसच्छः अतएव तस्य प्रसादं इच्छुः साधु इच्छन् विन्दिच्छू इति निपातः उकेत्यादौ उदन्तवर्ज्जनात् न षष्ठी॥ २४॥

अहं स्वप्नक् प्रसादेन तव वन्दारुभिः सह। अभीरुरवसं स्त्रीभिर्भासुराभिरिहेश्वर॥ २५॥

अहमित्यादि। अहं तव प्रसादेन इह गुहायामवसं उषितवान् स्वप्नक् निद्रालुः चिन्ताभावात् स्वपितृषोर्नजिङ् वन्दारुभिर्व्वन्दनशीलाभिः सह शृवन्द्योरारुः अभीरुः अभयशील: भियः क्रुक्लुकनौ भास्वराभिः भासनशीलाभिः ईश्वरः ईशनशीलः स्थेशभासेति वरच्॥ २५॥

अहमित्यादि। किमुक्तवानित्याह हे ईश्वर तव प्रसादेनाहं स्त्रीभिः सह इह गुहायां अवसं उषितवानस्मि अहं कीदृशः स्वप्नक् साधु स्वपन् स्वपतृषगृधधृषोन्नजइति न्नज् अभीरुर्भयहीनः क्रुक्लुकौभियइति क्रुः कीदृशीभिः स्त्रीभिः वन्दारुभिः प्रणामशीलाभिः साधु स्तुतिं कुर्व्वाणाभिर्व्वा शृवन्द आरुः भास्वराभिः दीप्तिशीलाभिः साधु दीप्यमानाभिर्व्वा भासीशिभ्यां यायायभास्कसेत्यादिना वरः॥ २५॥

विद्युन्नाशं रवेर्भासं विभ्राजं शशलाञ्छनं। रामप्रत्तेषु भोगेषु नाहमज्ञासिषं रतः॥ २६॥

विद्युदित्यादि। रामप्रत्तेषु रामदत्तेषु भोगेषु रतः सक्तः नाहमवाशिषं नाहं ज्ञातवान् लुङि यमरमेत्यादिना सगिटौ विद्युतां द्योतनशीलाविद्युतः तासां नाशं रवेर्भासः भासनशीलाद्दीप्तेर्विभ्राजं साधु दीप्यमानं शशलाञ्छनं चन्द्रं प्रावृडतिक्रान्ता शरदायातेति नाज्ञासिषमित्यर्थः सर्व्वत्र भ्राजभासेति क्विप् ॥ २६ ॥

विद्युदित्यादि। अहं रामेण प्रत्तेषु भोगेषु रतः आसक्तः सन् विद्युतां नाशं सूर्य्यस्य दीप्तिं साधु दीप्यमानं चन्द्रञ्च नाज्ञासिषं न ज्ञातवानस्मि शरदागमनं न ज्ञातवान् गृहे तिष्ठामीति भावः यमरमेति इमसनौ विभ्राजतइति क्विप् ॥ २६ ॥

एषशोकच्छिदोवीरान् प्रभो संप्रति वानरान्।
धरासमुद्रशैलानामन्तगान् प्रहिणोम्यहं ॥ २७ ॥

इति ताच्छीलिकाः समाप्ताः ॥

एषइत्यादि। हे प्रभो एषोऽहं संप्रति वानरान्प्रहिणोमि प्रस्थापयामि कीदृशान् शोकच्छिदः शोकापनोदनशीलान् अन्येभ्योऽपि दृश्यतइति क्विप् वीरान् शूरान् धराशैलसमुद्राणां अन्तं गच्छन्ति ये तानन्तगान् अन्तात्यन्तेति डः धरा पृथ्वी धरासमुद्रशैलानामिति पाठान्तरं अत्र वह्व्यनियमइति पूर्व्वनिपातः यथा वीणाशंखदुन्दुभयः। इति ताच्छीलिकक्वतः ॥ २७ ॥

एषइत्यादि। हे प्रभो एषोऽहं संप्रति वानरान् प्रहिणोमि

प्रेरयामि सैन्यानयनायेत्यर्थात् कीदृशान् शोकच्छिदः शोकापनो दनशीलान् चासुषिति क्विप् वीरान् समर्थान् अतएव पृथिवीस मुद्रपर्व्वतानामप्यन्तगान् अन्तं गच्छन्तीति ह्नजनादिति डः प्रभवतीति प्रभुः स्वयंशंविसंप्राद्भिति डुः प्राग्वन्नोणोन्तरदुर्गेरि त्यादिना नुविकरणस्य णत्वं इत्येवं सुग्रीवः प्रावदन्नृपमिति पूर्व्वेण सम्बन्धः। इति ताछीलिकाउक्ताः॥ २७॥

राघवस्य ततः कार्य्यं कारुर्व्वानरपुङ्गवः। सर्व्ववा नरसेनानामाश्वागमनमादिशत्॥ २८॥

इतोविशेषाधिकाराभावात् निर्विशेषक्कतोदर्शयन्नाह। राघे त्यादि। ततोऽभिधानामन्तरं वानरपुङ्गवः सुग्रीवः सर्व्ववानरसे नानामाशु शीघ्रमागमनमादिशत् आदिष्टवान् पुमांस्त्रासौ गौ श्चेति गोरतद्धितलुकीति समासान्तष्टच् व्युत्पत्तिमात्रमेतत् पुङ्ग वशब्दस्तु प्रधानमाचष्टे कारुः करोतीति उणादयो वहुलमिति औणादिकः क्कपावाजीत्यादिना उण् एवमाशु कस्य कर्त्तेत्याह राघवस्य कार्य्यं॥ २८॥

संप्रति निर्विशेषाः क्कतउच्यन्ते राघवेत्यादि। तत्कथा नन्तरं वानरश्रेष्ठः सुग्रीवः सर्व्वासां वानरसेनानां आशु शीघ्रं आगमनं आदिशत् आज्ञापयामास नाम्नयन्येतिक्केति गमेर्डोः पुमांश्चासौ गौश्चेति गोरतार्थे इति षः व्युत्पत्तिमात्रमिदं पुङ्ग वशब्दस्तूत्तरपदे प्रधानार्थः कीदृशः राघवस्य कार्य्यं कारुः

कर्त्ता अभिधानात् नाम्नयन्येतिकेत्यस्य क्वचिदसंज्ञायामपि प्रवृ त्तिरिति तेन उण् रधिगतावित्यस्मात् पूर्व्वेण उक् नञा निर्द्दिष्ट स्यानित्यत्वात् नेदित्पूजार्थाच्चोरित्यस्याप्रवृत्तेर्हसुङनलोपः त स्यापत्यमिति ष्णः अग्नूङ्याम्नौ उण् आग्नु ॥ २८ ॥

वयमद्यैव गच्छामोरामं द्रष्टुं त्वरान्विताः। कार कामित्रकार्य्याणि सीतालाभाय सोऽब्रवीत् ॥ २९ ॥

वयमित्यादि। आगमनमादिश्य सुग्रीवोऽब्रवीत् उक्तवान् वय मद्यैव गच्छामइति रामं द्रष्टुं रामं द्रच्यामइति त्वरान्विताः त्वरिताइत्यर्थः कीदृशावयं सीतालाभाय सीतां प्राप्स्यामइति कारकामित्रकार्य्याणि रावणवधादेः कार्य्यस्य कर्त्तारो भवि ष्यामइति गच्छामइति क्रियायां क्रियार्थायामुपपदे तुमन्ण्वुलौ भविष्यति काले स्यातां मित्रकार्य्याणीति अकेनोर्भविष्यदाधमर्ण्ण योरिति षष्ठीप्रतिषेधे द्वितीयैव स्यात् सीतालाभायेति भाववचना च्चेति क्रियायां क्रियार्थायामुपपदे भविष्यति घञ् तुमर्थाच्च भाववचनादिति चतुर्थी ॥ २९ ॥

वयमित्यादि। आगमनमादिश्य ससुग्रीवइदमब्रवीत् आदि ष्टवान् कपीनित्यर्थात् किमुक्तवानित्याह वयमद्यैव रामं द्रष्टुं गच्छामः अद्यैवेत्यनेन वानरानयनमद्यैव कार्य्यमिति त्वरा सू चिता वहुत्वं सेनासाहित्यात् सीतालाभाय त्वरायुक्ताः तादर्थ्ये चतुर्थी मित्रस्य रामस्य कार्य्याणि रावणवधादीनि कारकाः

कर्त्तारः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति षष्ठीविषये द्वितीया ॥ २९ ॥

ततः कपीनां संघाताहर्षाद्राघवभूतये। पूरयन्तः समाजग्मुर्भयदाया दिशो दश ॥ ३० ॥

ततइत्यादि। आदेशादनन्तरं कपीनां संघाताः समाजग्मुः हर्षात् हर्षेण आदेशादानमेव हर्षहेतुः राघवभूतये अपि नाम राघवस्य संपत्स्यादिति समाजग्मुरित्यस्यां क्रियायां क्रियार्थाया मुपपदे भाववचनाच्चेति भविष्यति क्तिन् चतुर्थीदश पूर्व्ववत् पूरयन्तोव्याप्नुवन्तः दश दिशः भयदायाः भयं दास्यामइत्यस्यां क्रियायामुपपदे अण्कर्म्मणिचेत्यण् आतोयुक् ॥ ३० ॥

ततइत्यादि। ततश्चादेशात् कपीनां संघाताः समूहा दश दिशः पूरयन्तो व्याप्नुवन्तो राघवस्य भूतये सम्पत्त्यर्थं हर्षादाजग्मुः किष्किन्धायामित्यर्थात् भयदायाः शत्रुभ्योभयं ददातीति मित्राणां भयं द्यन्ति खण्डयन्तीति वा श्वसश्वधेनतनदेति णः यन्त्रिदिति यन् ॥ ३० ॥

सुग्रीवान्तिकमासेदुः साधयिष्यामइत्यरिं। करिष्यन्तइवाकस्माद्भुवनं निर्द्दशाननं ॥ ३१ ॥

सुग्रीत्यादि। अरिं शत्रुं सादयिष्यामोव्यापादयिष्यामइति सुग्रीवान्तिकमासेदुः आगताः लृट्शेषेचेति चकारात् क्रियार्थायामुपपदे भविष्यति लृट् आसेदुरिति क्रिया क्रियार्था अकस्मा

इतर्कितं भुवनत्रयं निर्दशाननं रावणरहितं करिष्यन्त इव तथा विधमहासंरम्भदर्शनादुत्प्रेक्ष्यते लृट्शेषेचेति लृट् अत्र क्रियायाः क्रियार्थाया अन्यः शुद्धो भविष्यत्कालः शेषः ॥ ३१ ॥

सुग्रीवेत्यादि। वयमरिं साधयिष्यामः व्यापादयिष्याम इति एतदर्थं सुग्रीवस्यान्तिकं समीपमासेदुरागताः कपीनां संघाता इत्यनुषज्यते अकस्मादतर्कितं यथा स्यात्तथा भुवनं रावणशून्यं करिष्यन्त इव महापराक्रमदर्शनादुत्प्रेक्षेयं ॥ ३१ ॥

कर्त्तास्मि कार्य्यमायातैरेभिरित्यवगम्य सः। काकुत्स्थपादपच्छायां शीतस्पर्शामुपागमत् ॥ ३२ ॥

कर्त्तेत्यादि। एभिरायातैर्व्वानरैः कार्य्यं सीतान्वेषणादि कर्त्तास्मि करिष्यामीति अवगम्य अनद्यतने भविष्यति लुट् सुग्रीवः काकुत्स्थपादपच्छायामुपागमत् पद्यन्त इति पादाः पदरुजेति कर्त्तरि घञ् तत्र भविष्यतीति निवृत्तं पादैः पिबतीति पादपो वृक्षः आतोऽनुपसर्गेकः काकुत्स्थः पादप इव समाश्रयणीय त्वात् तस्य छायां शीतस्पर्शां अनुद्वेजनकरीं स्पृश्यत इति स्पर्श स्तस्मात्तउच्यते अकर्त्तरिचेति घञ् ननु पदरुजेत्यादिना तत्र हि स्पृशउपतापइति वक्तव्यमित्युक्तं स्पृशतीति स्पर्शउपतापः ॥ ३२ ॥

कर्त्तेत्यादि। आगतैरेभिर्व्वानरैरहं कार्य्यं सीतान्वेषणादिरूपं कर्त्तास्मि करिष्यामि इत्थं रूपं इत्यवगम्य निश्चित्य सुग्रीवः काकुत्स्थपादपच्छायामुपागमत् रामान्तिकं गतवानित्यर्थः शीत

स्पर्द्धा दुःखहन्त्रीमित्यर्थः पद्यतइति कर्त्तरि घञ् पादोमूलं तेनपिबति सेकजलमिति पादपोवृक्षः छाया स्यादातपाभावे शोभा यामपि दृश्यते। अत्र लक्षणया समीपदेशवृत्तिः॥ ३२॥

कार्य्यसारनिभं दृष्ट्वा वानराणां समागमं। अवै न्नाशं दशास्यस्य निर्वृत्तमिव राघवः॥ ३३॥

इति निरधिकारकृत्।

कार्य्येत्यादि। राघवोवानराणां समागमं दृष्ट्वा कार्य्यसारनिभं सीतालाभतुल्यं सरति कालान्तरे तिष्ठतीति कर्त्तरि कारके स्थिरइति घञ् दशास्यस्य रावणस्य नाशं विनाशं निर्वृत्तमिव निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्व्वादिणो लङि रूपं। इति निरधिकाराः कृतः॥ ३३॥

कार्य्येत्यादि। वानराणां समागमं दृष्ट्वा राघवोदशास्यस्य नाशं निर्वृत्तं निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्व्वादिणो ध्या दिप्कोदृशं समागमं कार्य्यसारस्य सीतालाभस्य तुल्यं सरति कालान्तरमिति सारः कर्त्तरि घञ् नशिर्भावे घञ्। इति निरधि काराः कृतउक्ताः॥ ३३॥

अतः परं घञधिकारः।

ततः कपिसमाहारमेकं निश्चायमागतं। उपाध्या यद्दवायामं सुग्रीवोऽध्यापिपद्दिशां॥ ३४॥

अतःपरं भावे कर्त्तरि च कारकइत्यधिकृत्य क्वदुच्यते। तत इत्यादि कपिसमागमनानन्तरं सुग्रीवः कपिसमाहारं कपिसमूहं दिशामायाममध्यापिपत् बोधितवान् अमुका अमुका दिक् ईदृशीति गतिबुद्धीत्यादिना समाहारस्य कर्म्मसंज्ञा आयाम परिज्ञानञ्चास्य वालिभयाद्दूरपरिभ्रमणात् एकनिश्रायमागतं एकराशितां प्राप्तं आयाममित्यर्थः निश्रायमिति परिमाणाख्यायामिति घञ् पश्चादेकशब्देन पूर्व्वकालैकेति सः कइव उपाध्यायइति उपेत्याधीयते अस्मादिति इङश्चेति घञ्॥ ३४॥

अथाकर्त्तरि कारके क्वतउच्यन्ते। ततइत्यादि कपिसमागमानन्तरं सुग्रीवः कपीनां समाहारं समूहं दिशामायामं दैर्घ्यं अध्यापिपत् अध्यापितवान् अस्यां दिशि एतत्पर्य्यन्तं गन्तव्यमिति ज्ञापितवान् आयामज्ञानञ्चास्य वालिभयेन दूरभ्रमणात् घोऽऔञेःशब्दाशनगतिज्ञेत्यादिना समाहारस्य प्रयोज्यस्य कर्म्मत्वं क्रीजीङोऽञेति इङश्चात्वं क्रीलीत्यादिना पण् उपाध्यायइव यथा गुरुरध्यापयति तथेत्यर्थः उपेत्याधीयतेऽस्मादिति घञ्लनटोऽघे इति घञ् कीदृशमायामं एकं निश्रायं ज्ञानं आगतं प्राप्तं अत्यभ्यासात् सर्व्वासां दिशां दैर्घ्यं सुग्रीवस्य ज्ञानारूढमित्यर्थः पूर्व्वेण घञ् एकोनिश्रायोनिश्रयोयस्येति कपिसमाहारस्य विशेषणं वा एतेनैकवाक्यता दर्शिता एवमागतं यमेर्घञि जनबधइत्यादिना पचे ह्रस्वाभावः॥ ३४॥

**सजलाम्भोदसंरावं हनूमन्तं सहाङ्गदं। जाम्ववन्नीलसहितं चारुसंद्रावमब्रवीत्॥ ३५॥**

भिंशदित्यादि । राज्ञा अस्माकं प्रत्यागमनस्यावधित्वेन निश्चितं विंशतः पूरणं दिनं यातं गतं मत्वा वयं अकृतार्थाश्चनिष्पादितस्वप्रयोजनाः सन्तः विषीदन्तोविषादं कुर्व्वन्तः प्रायोपवेशनया परलोकं उपास्महे गन्तुमिच्छामः विंशच्छब्दात् विंशत्यादेर्व्वेति तमट् ॥ ८९ ॥

म्रियामहे न गच्छामः कौशल्यायनिवल्लभां । उपलभ्यामपश्यन्तः कौमारीं पततां वर ॥ ९० ॥

एते प्रकीर्णकाः ।

म्रियेत्यादि । हे पततां पक्षिणां वर म्रियामहे न गच्छामः कौमारीं अकृतपूर्व्वदारपतिं लब्धवतीं कौमारादपूर्व्ववचनइति साधुः कौशल्यायनिवल्लभां कौशल्यायाअपत्यं कौशल्यायनी रामः कौशल्यकार्म्मार्य्याभ्यांचेति फिञ् फस्यायनादेशः तस्य वल्लभां दृष्टां उपलभ्यां प्रशस्तां पोरदुपधादिति यत् उपात्प्रशंसायामिति यत्प्रत्यये नुम् अपश्यन्तोऽनुपलभमानाः । एते प्रकीर्णकाः ॥ ९० ॥

म्रियेत्यादि । हे पततां वर पक्षिणां श्रेष्ठ वयं म्रियामहे न तु गच्छामः अर्थात् प्रभुपार्श्वं यतः कौशल्यायनिवल्लभां रामप्रियां अपश्यन्तः कैशल्याया अपत्यमिति नडादित्वात् फायनः ततः स्वार्थेष्णिः कीदृशीं उपलभ्यां स्तुत्यां पूशकसहेति यः उपात्स्तुताविति नुण् कौमारीं जितकार्त्तिकेयभार्य्यां अतिरूपवतीमित्यर्थः कुमारस्य कार्त्तिकेयस्य पत्नी कुमारी पत्यामपालकान्तादिति ईप् स्कन्दोमन्दमतिर्व्विवाहविमुखोधत्तेकुमारव्रतमिति कास्य

निकं मतु प्रकृतं देवसेना नामेन्द्रकन्या कार्त्तिकेयस्य पत्नी प्रसिद्धा तथाहि शतक्रतोरूपवती देवसेनेति वै सुता। सा महेन्द्रेण रत्यर्थं भार्य्यार्थेनोपपादितेति स्कन्दपुराणीयं वचनममरटीकायां मधुमाधवेन धृतं अथोपयन्ता सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनामिति कालिदासः कुमारीं जयतीति ढघेकादिति ण्ः णित्त्रिः यथोर्लोपः षित्त्वाद्दीप् किम्वा कौ पृथिव्यां मारीं माया लक्ष्म्या रीर्गतिर्यस्यां लक्ष्मीरूपामित्यर्थः एतेनादरातिशयउक्तः मा लक्ष्मीश्च प्रकीर्त्तिता धने रा रीर्गतिः ख्याता रोदने च प्रकीर्त्तिता इति चैकाचरकोषः वह्वप्रेयसी इत्युदाहरता वृत्तःकद्रत्यस्य व्यभिचारोदर्शितः तेनात्र काभावः किम्वा कुमारएव कौमारः स्वार्थे ण्ः कौमारस्य भार्य्यां रामस्य प्रथमपत्नीमित्यर्थः एतेनाप्यादरातिशयउक्तः अन्ये तु कुमारात् प्रथमपत्न्यां ण्इत्याहुः स्वमतेऽपि प्रथमपत्नीत्वमर्थाङ्गम्यते तथाहि कुमारशब्देन अकृतदारपरिग्रहउच्यते तदूढात्वेन प्रथमपत्नीत्वं। एते प्रकीर्णकाः ॥ ८० ॥

जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतीः। यूयं सङ्कुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ ॥ ८१ ॥

इतः क्ङितिशेषमधिकृत्याह जगेत्यादि। ध्रुवं अवश्यं स्मृतिं स्मृतिशास्त्रं नाध्यगीढ्वं नाधीतवन्तइति पक्षी वानरान् जगाद विभाषालुङ्लृङोरिति विभाषागाङादेशः गाङ्कुटादिभ्य

इति सिचोकित्त्वं घुमास्थेतीत्वं धिचेति सिचोलोप इणःषीढ्वमिति मूर्द्धन्यः यस्माद्यूयमस्मिन् काले संकुटितुं अवसातुमथ वस्यथ अभिप्रायं कुरुथ कुटादित्वात् ङित्त्वं॥ ८१॥

अथ किदतिदेशाधिकारः। पाणिनिमते कुटादिसूत्रसमूहैः कानुबन्धत्वातिदेशात् स्वमते त्वगुणाधिकारः। जगेत्यादि। सपक्षो वानरान् जगाद किमित्याह ध्रुवं निश्चितं उत्प्रेक्षे वा यूयं स्मृतीर्धर्म्मसंहिताना ध्यगीढ्वं नाधीतवन्तः इङश्चाध्वं गीङ्स्थोर्व्वेति गीरादेशः घत्वात् णुः घेसलोपोवेति सेर्लुक् टोठौ ढोधेढोति धस्य ढः यस्मादस्मिन् काले संकुटितुं मर्त्तुं यूयं अध्यवस्यथ इच्छथ कुटिश्चकौटिल्ये प्रभुकार्य्यं त्यक्ता मरणमेवात्र कौटिल्यं धातोरनेकार्थत्वादा कुटाद्युश्रीञ्जितीति नियमाद्गुणत्वं अध्यवपूर्व्वस्य षोयत्नाशे इत्यस्य यन्योतृश्रमादीति ओकारलोपः॥ ८१॥

नायमुद्विजितुं कालः स्वामिकार्य्याद्भवादृशां। हृतभार्य्ये च्युते राज्याद्रामे पर्य्युत्सुके भृशं॥ ८२॥

अयमेवावसितुं काल इति चेदाह नायमित्यादि। भवादृशां युष्मद्विधानां स्वामिकार्य्यादुद्विजितुं नायं कालः विज इडिति ङित्त्वं किमिति न भवतीति चेदाह राज्याच्च्युते भ्रष्टे रामे निर्व्वासितत्वात् तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके सीतायां॥ ८२॥

नायमित्यादि। भवादृशां युष्मद्विधानां सत्पुरुषाणां स्वामि कार्य्यात् उद्विजितुं चलितुं नायं कालः समयः कुतइत्याह राज्या च्युते भ्रष्टे रामे तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके च सति तु भार्य्या युष्मद्वचनेन त्रातुमित्यर्थात् विजेर्गुर्निमोत्यगुणत्वं ॥ ८२ ॥

यत्नं प्रोर्णुवितुं तूर्णं दिशं कुरुत दक्षिणां। प्रोर्णु विनीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीं ॥ ८३ ॥

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तुमुन् तूर्णं शीघ्रं यत्नं कुरुत तस्यान्दिशि पुरीं द्रक्ष्यथ काञ्चनीं प्राणि रजतादिभ्योऽञ् प्रोर्णुविनीं अभिव्यापिनीं तृचि रूपं दिवआका शस्य कर्म्मणि षष्ठी विभाषोर्णोरिति ङित्त्वपक्षे उवङ् अङित्त्वपक्षे च गुणः कुरुतेति सार्व्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति तस्य चार्द्धधातुकत्वात् अङित्त्वे धातोर्गुणः अतउत् सार्व्व धातुकमपिद्दिति ङित्त्वे विकरणस्य गुणो न भवति ॥ ८३ ॥

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तूर्णं शीघ्रमेव यूयं कुरुत तत्र दिशि काञ्चनीं स्वर्णनिर्म्मितां पुरीं द्रक्ष्य थ कीदृशीं दिवआकाशस्य प्रोर्णुविनीं अभिव्यापिकां कर्म्मणि षष्ठी ङिदिम्वोर्णोरिति ङित्त्वादगुणत्वे अुश्चोरित्युव् पक्षे गुणः काञ्चनस्य विकारइत्यर्थे विकारसंघेति ष्णः वर्द्धोऽकिञ्अइत्यइति इंशिखकारस्य रः ॥ ८३ ॥

लङ्कां नाम्ना गिरेर्मूर्द्ध्नि राक्षसेन्द्रेण पालितां । निर्जित्य शक्रमानीता ददृशुर्यां सुरस्त्रियः ॥ ९४ ॥

लङ्कामित्यादि । याम्पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः दृष्टवत्यः असंयोगाल्लिट्किदिति कित्त्वं तां यातेति वक्ष्यमाणेन सम्बन्धः गिरेः सुवेलस्य मूर्द्ध्नि स्थितां राक्षसेन्द्रेण पालितामिति दुर्गमत्वमाख्यातं शक्रं निर्जित्य सुरस्त्रिय आनीता इति च रावणस्य माहात्म्यं ॥ ९४ ॥

लङ्कामित्यादि । यां पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः तां द्रक्ष्यथेति पूर्व्वेण सम्बन्धः कित्ठीढीपमिति कित्त्वाद्गुणत्वं गिरेः सुवेलस्य मूर्द्ध्नि स्थितां आश्लेषाधारसम्बन्धात् स्थितामिति लभ्यते राक्षसेन्द्रेण रावणेन पालितां रक्षितां सुरस्त्रियः कीदृश्यः शक्रमिन्द्रं निर्ज्जित्यानीताः राक्षसेन्द्रेण इत्यनुषञ्जनीयं एतेन तस्य वीर्य्यमपि ज्ञापितं ॥ ९४ ॥

वभूव याधिशैलेन्द्रं म्रदित्वेवेन्द्रगोचरं । कुषित्वा जगतां सारं सैका शङ्के कृता भुवि ॥ ९५ ॥

वभूवेत्यादि । अधिशैलेन्द्रं शैलेन्द्रस्य सुमेरोरुपरि सप्तम्यर्थेऽव्ययीभावः इन्द्रगोचरमिन्द्रनिलयममरावत्याख्यं म्रदित्वेव तिरस्कृत्येव वभूव इन्धिभवतिभ्यां चेति कित्त्वं जगतां सारं कुषित्वा निष्कृष्य सैका भुवि कृता निर्मितेत्यहं शङ्के तां यात म्रदित्वाकुषित्वेति नक्त्वासेडिति कित्त्वप्रतिषेधे प्राप्ते मृडमृदेत्यादिना कित्त्वं ॥ ९५ ॥

बभूवेत्यादि। या पुरी शैलेन्द्रस्य सुमेरोरुपरि इन्द्रस्य गोचरं विषयं अमरावत्याख्यं मृदित्वा अभिभूय बभूव अधिशै लेन्द्रं सुरालयं वा सप्तम्यर्थेऽव्ययीभावः अहमेवं शङ्के तर्कयामि जगतां सारमुत्कृष्टभागं कुषित्वा आकृष्य सैवैका भुवि कृता निर्म्मिता विश्वकर्म्मणेत्यर्थात् सेमक्षुधकुषेत्यादौ क्षुधादिवर्ज्जनात् किच्चं ॥ ८५ ॥

अमृडित्वा सहस्राक्षं क्लिशित्वा कौशले निजे। उदित्वालञ्चिरं यत्नात् सैका धात्रा विनिर्म्मिता ॥ ८६ ॥

अमृडीत्यादि। सहस्राक्षमिन्द्रममृडित्वा असुखिनं कृत्वा निजैः आत्मीयैः कौशलैः चिरं क्लिशित्वा प्रयत्नं कृत्वा उदित्वा अभिधा यालमपर्य्याप्तमेवं करिष्यामीति यत्नात् महता प्रयासेन सैका धात्रा विनिर्मिता पूर्व्ववत्किच्चं ॥ ८६ ॥

अमृडीत्यादि। सहस्राक्षं इन्द्रं अमृडित्वा असुखिनं कृत्वा निजे आत्मीये कौशले नैपुण्ये चिरं क्लिशित्वा क्लेशमनुभूय अलं पर्य्याप्तमेवमेवं करिष्यामीत्युदित्वा कथयित्वा चिरकालेन यत्नात् सैका धात्रा निर्म्मिता इत्यपि अहं शङ्क इत्यनेनान्वयः मृडशब्द सौदे वमोरस्येतीम् क्लिश्युत्र्चोपतापे पूक्लिशउदितइति वेम् क्लिशू शब्दोविरोधे इत्यस्य तु वेमूदित्यादिना वदेवापि सर्व्वत्र सेम क्षुधेत्यादिवर्ज्जनात् किच्चं वदेर्यजादित्वात्क्तिः कुशलस्य भावः कर्म्म वेति विकारसंघेति ष्णः ॥ ८६ ॥

मुषित्वा धनदं पापोयां गृहीत्वावसाद्द्विषन्। तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षितां॥ ९७॥

मुषित्वेत्यादि। मुषित्वा धनदम्वैश्रवणं तस्मात्पुरं पुष्पकञ्च विमानमपहृतं पापः पापाचरणात् यां गृहीत्वा अवसत् उषितः द्विषन् शत्रुः शक्रेण रुदित्वेवोपेक्षितामवधीरितां रुदविदेति कित्त्वं तत्र चकारेणत्क्तेत्यनुवर्त्तते॥ ९७॥

मुषीत्यादि। धनदं कुवेरं मुषित्वा वञ्चित्वा ततएव यां लङ्कां गृहीत्वा पापः कुत्सिताचारोद्विषन् शत्रूरावणोऽवसत् तां यूयं यात गच्छत कीदृशीं शक्रेण इन्द्रेण रुदित्वा क्रन्दित्वेव उपेक्षितां त्यक्तां न तु पारयित्वेति भावः मुषगलुटने लघिररुदरोदे व्युङ्केवोहसादेरित्यादिना कित्वादगुणत्वं ग्रहेः सेमचुधेत्यादिना कित्वात् ग्रहस्वपाद्योरिति जिः ग्रहेरिमार्घइति दीर्घत्वं॥ ९७॥

विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः। उक्तां पिपृच्छिषूणां वोमास्मभूत सुषुप्सवः॥ ९८॥

विदीत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा पूर्व्ववत्किच्चं रावणं विजिघृक्षवः विगृहीतुमिच्छवः सुषुप्सवः शयितुमिच्छवो मास्मभूत न प्रमत्ताभवतेत्यर्थः रावणस्य बलीयस्त्वादिदमुक्तं मया वोयुष्माकम्पिपृच्छिषूणां प्रष्टुमिच्छूनां अत्र रुदविदेति सनः कित्वे सम्प्रसारणं प्रच्छेः किरश्च पञ्चभ्यइतीडागमः॥ ९८॥

विदित्वेत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा ज्ञात्वा रावणं विजिघृक्षवो विरोधयितुमिच्छवः सन्तो यूयं सुषुप्सवः शयितुमिच्छवो मा स्म भूत मा लसा असावधानाः स्थ न भवतेत्यर्थः रावणस्य मायावित्त्वाद्बलवत्त्वाच्च एतत्सर्व्वं पिपृच्छिषूणां प्रष्टुमिच्छतां वो युष्माकं कृते मया उक्तं एतेनाप्रष्टभाषणेऽनौचित्यं परिहृतं सम्बन्ध विवक्षया षष्ठी विदस्थाने व्युक्तोऽवदति किंत्त्वं ग्रहउपादाने सन् नेमुगुह्यग्रहति अनिम् ग्रहस्वपप्रच्छांजिरिति जिः णुर्नानि मीत्य गुणत्वं होढः झभान्तस्येति घत्वं षढोःकदति कः किलादि ति षः सन्भिचेति उः प्रच्छेःसनि स्मिङ्पङ्कित्यादिना दूम् ॥ ९८ ॥

नाविविदिषुमभ्येति सम्पद्रुरुदिषुं नरं। किं मुमुषिषुवद्यात द्विषोनापचिकीर्षया॥ ९९ ॥

नावीत्यादि। वेदितुं ज्ञातुमिच्छुर्यो न भवति तं नरमविविदिषुं रुरुदिषुं रोदितुमेषणस्वभावं सम्पद्विभूतिर्नाभ्येति नागच्छतीति वोमयोक्तमिति योज्यं किन्न यात न गच्छत मुमुषिषुवत् चौरवदि त्यर्थः पूर्व्ववत्किंत्त्वं द्विषः शत्रोरपचिकीर्षया अपकर्त्तुमिच्छया इकोझलीति किंत्त्वे गुणो न भवतीति अज्झनगमांसनीति दीर्घः ऋतइद्धातोः॥ ९९ ॥

नावीत्यादि। सम्पत् सम्पत्तिरविविदिषुं वेदितुं ज्ञातुमनिच्छुं रुरुदिषुं अनध्यवसायात् रोदनेच्छुं नरं पुरुषं न अभ्येति न

अभिगच्छति तेन ज्ञापनार्थं प्रब्रवीमि वदति वक्ष्यमाणेन सम्बन्धः द्विषः अचोरपचिकोर्षया अपकारेच्छया मुमुषिषुवत् चौरवत् यूयं किं न यात तदेव सीतादर्शनसम्भवात् युङोऽवइत्यादिना विदरदमुषः सनः कित्वादगुणत्वं इत्रः सनि धीऽज्झनिङ्गमा मिति दीर्घः णुर्नानिमीत्यगुणत्वे च्छदिरणाविति इर् र्थ्यनचत घीति दीर्घः संस्थादइति श्रः॥ ९९॥

वुभुत्सवोद्रुतं सीतां भुत्सीढ्वं प्रब्रवीमि वः। मा च भुद्धं मृषोक्तं नः कपीढ्वं स्वामिने हितं॥ १००॥

वुभुत्सेत्यादि। वुभुत्सवो ज्ञातुमिच्छवः यदि सीतां वुधेस्सनन्ता द्रुलन्ताचेति कित्वं एकाचइति भष्भावः तदा द्रुतं तां भुत्सीध्वं जानीतेति वो युष्मान् ब्रवीमि लिङ्सिचाविति कित्वं मृषोक्तं मिथ्या क्तं नोऽस्माकं मा च भुद्धं न जानीत अपितु सत्यं झलोझलीति सिचोलोपः झलांजशझषि कित्वं पूर्व्ववत् अतोयूयं स्वामिने रामाय हितं कपीढ्वं कुरुत उश्चेति कित्वं इणः षीध्वमिति मूर्द्धन्यः ॥ १००॥

वुभुदित्यादि। सीतां वुभुत्सवो वोद्धुमिच्छवोयूयं द्रुतं शीघ्र मेव भुत्सीध्वं जानीत इति वो युष्मान् अहं प्रकृष्टं ब्रवीमि अस्माक मुक्तं वचनं मृषा मिथ्या मास्म भुद्धं न जानीत अपितु सत्यमेव अस्मदएकत्वे वा वक्तृत्वमभिधानात् स्वामिनो रामस्य हितं कपीढ्वं कुरुत समार्थेनेत्यादिना षष्ठी स्वामिने इति पाठे क्रियार्थवष क्षिति चतुर्थी वुधीङ्वेदने सनि णुर्नानिमीत्यगुणत्वं झभान्त

स्वेति भत्वं अन्यच्च ढ्वाः सीध्वं इगुङ्र्मढीति किच्वाद्गुणत्वं अपर च मायोगेऽमोऽभावः झसखादिति सेर्लोपः ढ्रोढ्याःसीध्वं पूर्व्व वत् किच्वं टोढोढे धोढिति धस्य ढत्वं॥।१००॥

समगध्वं पुरःशचीर्मोदयध्वं रघूत्तमं। नोपायध्वं भयं सीता नोपायंस्त दशाननः॥१०१॥

समेत्यादि। इदमहमाशंसे यदुत शचोः रावणस्य पुरः अग्रतः समगध्वं सङ्गताभवत आशंसायां भूतवचेति लुङ् समोगम्यृच्छीति तङ् वागमइति सिचः किच्वे अनुदात्तेत्यनुनासिकलोपः ह्रस्वादङ्गादिति सिचोलोपः मोदयध्वं रघूत्तमं हर्षयत तत्कार्य्यकरणात् मा च भयमुपायध्वं सूचयत भयं माकार्ष्टेत्यर्थः आङोयमहनइति तङ् यमोगन्धनइति सिचः किच्वे अनुनासिक लोपः गन्धनं सूचनं अन्यथा युष्मासु गन्धितभयेषु नियतमसौ दशाननः सीतामुपायंस्त स्वीकृतवान् स्यात् तस्य दुर्व्वृत्तत्वात् आशंसायां भूतवचेति अनिष्टाशंसायां लुङ् उपाद्यमःस्वीकरण इति तङ् स्वीकरणञ्चात्र विवाहनमुक्तं विभाषोपयमइति अकित्वपक्षे रूपं॥१०१॥

समेत्यादि। इदमहमाशंसे यत् शचीरावणस्य पुरोऽग्रतो यूयं समगध्वं सङ्गतामवत अभिधानादाशंसायां टी आशंसायां भूतसामान्यविहितास्वेति परः समोगम्यृच्छेति मं इगुङ्र्मटीत्यादिना सेःकित्वात् वनतनाद्यमिमामिति मलोपः झसखादिति सिलोपः रघूत्तमं रामं यूयं मोदयध्वं हर्षयत तत्कार्य्यकरणात्

भयं न उपायध्वं न सूचयत न कुरुतेत्यर्थः यमःसूचनइति सेः किस्वात् सलोपः आत्मनेपदाधिकारमध्ये यमःसूचनइत्यस्य करणादेव सूचनार्थे यमआत्मनेपदं किम्वा उपयमोविवाह इत्यनेन मं तच विवाहः स्वीकारः उपायमः स्वीकरणइति पर सूचं यमःसूचनेवाहुदाहे इत्यचापि उदाहः स्वीकारः स्वीकरणे वेति परसूचं स्वीकारार्थेन परिणयोऽपि गम्यते तदा भयं न उपायध्वं न स्वीकुरुत दशाननः सीतां न उपायंस्त विवाहेन न स्वीकृतवान् न स्वीकरोतु वा अत्राप्याशंसायां टी वाहुदाहइति किस्वाभावपचे सलोपाभावः इत्येवं जगाद वानरान् पचीत्य न्वयः॥ १०१ ॥

ततः प्रास्थिषताद्रीन्द्रं महेन्द्रं वानराद्रुतं। सर्व्वे किलकिलायन्तो धैर्य्यञ्चाधिषताधिकं॥ १०२ ॥

ततइत्यादि। ततः सम्पातिवचनानन्तरं सर्व्वेवानरामहेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः धैर्य्यञ्चाधिकमाधिषत आहितवन्त आत्मनि तिष्ठतेर्द्धातेश्च स्थाघ्वोरिच्चेति किस्वमिलश्च तिष्ठतेः समवप्रविभ्यःस्थइति तङ् किलकिलायन्तः किलकिलाध्वनिं कुर्व्वाणाः अव्यक्तानुकरणेत्यादिना डाच् तदन्तात् लोहितादि डाज्भ्यःक्यष् वाक्यषइति परस्मैपदं॥ १०२ ॥

ततइत्यादि। सम्पातिवचनानन्तरं सर्व्वे वानरा महेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः द्रुतं शीघ्रं मुहुरिति पाठे किलकिलायन्त इत्यनेन सम्बन्धः प्रपूर्व्वात्तिष्ठतेः प्रतिज्ञानिर्णयेत्यादिना मं स्था

शीङिति ङिरगुणत्वञ्च मान्तोऽदन्तत इत्यत् अधिकं धैर्य्यञ्च आत्मनि आधिषत आश्रितवन्तः धाञोञ्जिन्न्यन्तेत्यादिना सं अन्यत् पूर्ववत् कीदृशाः किलकिलायन्तः किलकिलाशब्दं कुर्व्वन्तः नैकाचोऽव्यक्तानुकरणादिति डाच् द्वित्वञ्च डाच्चोश्चितादेरिति ञ्यः पञ्च ॥ १०२ ॥

निकुञ्जे तस्य वर्त्तित्वा रम्ये प्रक्ष्वेदिताः परं। मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिं ॥ १०३ ॥

निकुञ्ज इत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने वर्त्तित्वा स्थित्वा नक्त्वासेडिति कित्त्वप्रतिषेधः परं प्रक्ष्वेदिताः उच्चैरव्यक्तशब्दं कुर्व्वाणाः निष्ठाशीङिति कित्त्वप्रतिषेधः तोयधिमत्युदैक्षन्त दृष्टवन्तः लङि रूपं कीदृशं मणिरत्नाधिशयितं क्तोऽधिकरणे चेति क्तः पूर्व्ववत्कित्त्वप्रतिषेधः कीदृशं मणिरत्नाधिशयितं मणिर्यद्रत्नमिति स्त्रीरत्नादावपि रत्नशब्दस्य दृष्टत्वात् एकपदव्यभिचारे विशेषणविशेष्यभावः तस्याधिशयितमवस्थानमित्यर्थः ॥ १०३ ॥

निकुञ्ज इत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने रम्यत्वात् वर्त्तित्वा स्थित्वा परमतिशयेन प्रक्ष्वेदिताश्चाव्यक्तशब्दं कर्त्तुमारब्धावानरास्तोयधिं समुद्रं प्रत्युदैक्षन्त दृष्टवन्तः कीदृशं मणिरत्नाधिशयितं मणिरत्नैर्मणिश्रेष्ठैरधिशयितं अधिष्ठितं कर्म्मक्रियेत्यादिना अधिपूर्व्वशीङ आधारस्य कर्म्मत्वात् कर्म्मणि क्तः आधारे क्त इति केचित् आञि श्विदकूजने घेचादिर्ढेक इति

कर्त्तरि क्तः भावादिक्षेवेति पचे इम् उभयत्र पूङ्गीधृषेत्यादिना गुणः वर्त्तित्यत्र षेमचुधेत्यादिना कित्त्वनिषेधात् गुणः॥ १०३॥

अमर्षितमिव भ्रन्तं तटाद्रिं सलिलोर्म्मिभिः। श्रिया समग्रं द्युतितं मदेनेव प्रलोठितं॥ १०४॥

अमेत्यादि। सलिलोर्म्मिभिः कल्लोलैः तटाद्रीन् तटस्थान् पर्व्वतान् भ्रन्तं प्रत्युदैचन्त अमर्षितमिव स्पेस्तितिचायामिति कित्त्वप्रतिषेधः पश्चात् नञ्समः श्रिया हेतुभूतया समग्रं संपूर्णं द्युतितमिति कर्त्तरि निष्ठा यदि वा श्रिया कर्तृभूतया द्युतितं शोभितं अत्रेत्यध्याहृत्य तमैचन्तेति योज्यं एवञ्च कृत्वा उदुपधादित्यादिना भावे निष्ठायां विकल्पेन कित्त्वप्रतिषेधात् कित्त्वमुदाहृतं मदेनेव मत्ततयेव श्रिया हेतुभूतया प्रलोठितं घूर्णितुमारब्धं आदिकर्म्मणि निष्ठायामकित्त्वमुदाहृतं॥ १०४॥

अमेत्यादि। तोयधिं प्रत्युदैचन्तेत्यत्रान्वयः सलिलोर्म्मिभिर्जलवेगैस्तटाद्रीन् तटसम्बन्धिनः पर्व्वतान् भ्रन्तं अमर्षितमिव क्रुद्धमिव पूङ्गीधृषेत्यादिना चमार्थस्येयोगुणः पश्चान्नञ्समासः ऊर्म्मिः स्त्रीपुंसयोर्व्वीच्यां प्रकाशे वेगभङ्गयोरिति मेदिनी वीचिवाचित्वेऽत्र सलिलपदं स्वरूपकथनार्थं श्रिया हेतुभूतया समग्रं सम्पूर्णं यथा स्यात्तथा द्युतितं शोभमानं गत्यर्थाढेति कर्त्तरि क्तः दीपितुमारब्धं वा तदा भावादिक्षेवोदुपधाऽन्यतरदति पचे गुणाभावः मदेन मत्ततयेव प्रलोठितं घूर्णितुमारब्धं सदाचञ्चलत्वात् आदिढेकः पूर्व्वेण पचे गुणः॥ १०४॥

पूतं शीतैर्नभस्वद्भिर्ग्रन्थित्वेव स्थितं रुचः। गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्व्वतोमुहुः॥ १०५॥

पूतमित्यदि। नभस्वद्भिर्व्वायुभिः शीतैः पूतं पवित्रीकृतं पूङ्श्चेति विकल्पेनेट् अतएव पक्षे पूङः क्त्वानिष्ठयोः कित्त्वप्रतिषेधोऽत्र न भवति तत्र सेडित्यनुवर्त्तते रुचोदीप्तीर्ग्रथित्वेव संदर्भ्येव स्थितं नोपधात्थफान्ताद्वेति कित्त्वप्रतिषेधपक्षे रूपं सर्व्वतस्तरङ्गान् गुम्फित्वेव निरस्यन्तं क्षिप्यन्तं नोपधादिति विकल्पेन कित्त्वप्रतिषेधः यत्रेत्यध्याहृत्य तमैक्षन्तेति योज्यं॥ १०५॥

पूतमित्यादि। शीतैः शीतलैर्नभस्वद्भिर्व्वायुभिः पूतं पवित्रीकृतं तोयधिं प्रत्युदैक्षन्तेत्यनेन सम्बन्धः पूङ्क्लिशवमेति इटोऽभावपक्षे पूशीधृषेत्यादौ सेमग्रहणान्न गुणः नभःशब्दान्मोऽङ्मस्यपादतुरिति वतुः नदंतसाविति पदत्वनिषेधात् सोर्व्विःफदत्यस्य पदान्तविषयत्वात् विसर्गाभावः रुचोदीप्तीर्ग्रन्थित्वेव स्थितं सर्व्वत्र दीप्तिमत्त्वात् उत्प्रेक्षेयं ग्रन्थक्लिगसन्दर्भे थफान्तेद्वेति विकल्पेनाकित्त्वात् नलोपाभावः सर्व्वत्र तरङ्गान् गुम्फित्वेव मुहुः पुनःपुनर्निरस्यन्तं क्षिपन्तं गुन्फग्रग्रन्थे पूर्व्वेण पक्षे कित्त्वात् अनुङ्गलोपइति नलोपः॥ १०५॥

वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि। तृषित्वेवानिशं स्वादु पिबन्तं सरितां पयः॥ १०६॥

वश्चीत्यादि। स्थित्यनतिक्रमादम्बरं दूरम्वश्चित्वातिक्रम्य वश्चित्वश्चीति क्त्वाप्रतिषेधः तस्मिन्नात्मनि स्वरूपे तिष्ठन्तं अत्र नश्चाप्रशानिति नकारस्य रुत्वं पूर्व्वस्य त्वनुनासिकादेशः तृषि त्वेव तृषितइव भूत्वा तृषिमृषीत्यादिना प्रतिषेधः तत्सलिलस्या स्वादुत्वात् सरिताम्पयः स्वादु पिवन्तं अनिशमजस्रं ॥ १०६ ॥

वश्चित्वेत्यादि। पुनः कीदृशं तोयधिं अम्बरमाकाशं वश्चित्वापि अतिक्रम्यापि स्वस्मिन् स्वकीये आत्मनि स्वरूपे तिष्ठन्तं मर्य्यादानतिक्रमात् पृथ्वयाउच्चोऽपि भूत्वा तां नातिक्रामतीति भावः वन्चुगत्यां तृषमृषकृशेत्यादिना विकल्पेनाकित्वात् नलो पाभावः तृषित्वेव अनिशं सततं स्वादु मधुरं सरितां पयोनदीनां जलं पिवन्तं स्वजलस्य चारत्वात् जितृषापिपासायां पूर्व्वेण कित्वादगुणत्वं ॥ १०६ ॥

द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्द्धितं। मेरो र्जेतुमिवाभोगमुच्चैर्दिद्योतिषुं मुहुः ॥ १०७ ॥

द्युतीत्यादि। शशिना नक्तं रात्रौ द्युतित्वा दीप्तिमता भूत्वा रश्मिभिः परिवर्द्धितं वृद्धिं नीतं सन्तं तोयधिं मेरोराभोगमत्यन्तं जेतुमिव मुहुरुच्चैर्दिद्योतिषुं वर्द्धितुमिच्छुमित्यर्थः अनेकार्थत्वाद्धा तूनां द्युतित्वा दिद्योतिषुमिति रलोव्युपधादिति कित्वाकित्वे तत्र युकारोपधादिकारोपधाच्च रलन्ताद्धलादेर्धातोः परौ क्वासनौ वा न कितौ भवतइति सूत्रार्थः ॥ १०७ ॥

द्युतित्वेत्यादि। पुनः कीदृशं तोयधिं अग्निना सता रात्रौ द्युतित्वा दीप्तिमता सता रश्मिभिः परिवर्द्धितं वृद्धिं नीतं द्युतक्ष्क् दीप्तौ व्युङ्कोऽवोष्टसादेरिति वा क्त्वाद्गुणाभावः मेरोराभोगं परिपूर्णतां जेतुमिव ततउच्चैरधिकं मुहुः पुनःपुनः दिद्योतिषुं द्योतनमिच्छन्तं उच्चैर्भूत्वा द्युतिमिच्छन्तं वा धातोरनेकार्थतया उच्चैरूर्द्ध्वं वर्द्धितुमिच्छन्तमिति केचित् द्युतेः सनि द्युत्स्वाप्योरिति खेर्ज्जिः पूर्व्वेण पचे क्त्वाभावात् गुणः॥१०७॥

विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान् भ्रमन्मकरभीषणं समधिगम्य चाधः पयः। गमागमसहं द्रुतं कपिवृषाः परिप्रैषयन् गजेन्द्रगुरुविक्रमं तरुमृगोत्तमं मारुतिं॥१०८॥

इति भट्टिकाव्येऽधिकारकाण्डे द्वितीयः काव्यस्य सप्तमः सर्गः॥७॥

विलोक्येत्यादि। कपिवृषाः कपिमुख्या मारुतिं हनूमन्तं द्रुतं परिप्रैषयन् व्यसर्ज्जयन् परिप्रपूर्व्वादिषुगताविस्मात् हेतुमण्यन्तात् लङि रूपं किं कृत्वेत्याह विलोक्य सलिलोच्चयान् सलिलोर्म्मीन् ऊर्द्ध्वश्चोयतइत्येरच् अधिसमुद्रं समुद्रस्योपरि अभ्रंलिहान् दूरमुच्छ्रितान् अधश्च पयः समधिगम्य ज्ञात्वा कीदृशं भ्रमद्भिर्म्मकरैर्भीषणं भयानकं भीषयतीति नन्द्यादित्वाल्ल्युः गमागमसहं गमनागमनयोग्यं मारुतिं गजेन्द्रस्येव गुरुर्व्विक्रमो यस्य

तरुमृगेषु वानरेषूत्तममिति सप्तमीति योगविभागात्सः। इति क्तिचादिदेशाधिकारः॥ १०८॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे द्वितीयः परिच्छेदः काव्यस्य सीतान्वेषणः सप्तमः सर्गः॥

विलोक्येत्यादि अधिसमुद्रं समुद्रस्योपरि सलिलोच्चयान् तरङ्गान् अभ्रंलिहान् अत्युच्छ्रितान् विलोक्य अधस्य पयोजलं भ्रमद्भिरितस्ततो गच्छद्भिर्मकरैर्जलजन्तुविशेषैर्भीषणं भयानकं समधिगम्य ज्ञात्वा भयात् स्वयं गन्तुमशक्ताः कपिवृषाः कपिश्रेष्ठामारुतिं हनूमन्तं द्रुतं परिप्रेषयन् व्यसर्ज्जयन् परिप्रपूर्व्वादिषगताविव्यस्मात् प्रेरणे ण्यन्तात् घो मारुतिं कीदृशं गमने चागमने च समर्थं गजेन्द्रस्येव ऐरावतस्येव गुरुर्व्विक्रमो यस्य तं अतएव तरुमृगेषु वानरेषु उत्तमं श्रेष्ठं ऊर्द्ध्वं चीयतइत्यल् उच्चयः अधिसमुद्रमिति सप्तम्यर्थेऽव्ययीभावः अभ्रंलिहानिति तृभृदृदृशीत्यादिना अभिधानादसंज्ञायामपि खः गुणाभावोऽप्यभिधानात् भीषणमिति नन्द्यादित्वादनः कभावेऽमो इत्यनेन वा अनट्। इति क्तिदतिदेशाधिकारः॥ १०८॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां अधिकारकाण्डे सप्तमः सर्गः॥

अगाधत ततोव्योम हनूमानुरुविक्रमः। अत्यशेरत तद्वेगं न सुपर्णार्कमारुताः॥ १।

आत्मनेपदमधिकृत्याह। अगाधतेति ततोविसर्जनानन्तरं हनूमान् समुद्रलङ्घनाय व्योमाकाशमगाधत प्रस्थितवान् गाधृ प्रतिष्ठालिप्सयोरित्यस्माल्लङ् अनुदात्तङितइति अनुदात्तेत्वादात्मनेपदं उरुविग्रहः कामरूपित्वात् तदानीमुत्पादितविपुलकायः तस्य चोत्पततोवेगं गरुडादित्यपवनाः नात्यशेरत नातिशयित वन्तः ङित्वात्तङ् शीङोरुट् शीङः सार्व्वधातुके गुणः॥१॥

आत्मनेपदाधिकारः स च समते माधिकारः। अगेत्यादि ततः प्रेषणानन्तरं हनूमान् समुद्रलङ्घनाय व्योम आकाशमगाधत प्रस्थितवान् गाधृङ्श्रोप्रतिष्ठालिप्सयोः. ङित्वात्नवशःपमे इति मं अगाहतेति पाठे ङागाहविलोडे इत्यस्मात् घो उरुविग्रहः कामरूपित्वात्तदानीमुत्पादितमहाशरीरः सुपर्णार्कमारुताः गरुडसूर्य्यवायवोऽपि तस्य हनूमतोवेगं न अत्यशेरत नाति चक्रमुः शीङ्लञिखप्रे त्वानुबन्धत्वादादादिकः ङानुबन्धात्मं शीङोरेर्णुरिति गुणः मान्तोर्मिति रम् मान्तोऽदनतइति अत् शोभनानि पर्णानि पक्षायस्य हिरण्मयत्वात् ससुपर्णः॥१॥

अभायत यथार्केण सुप्रातेन शरन्मुखे। गम्यमानं न तेनासीदगतं क्रामता पुरः॥२॥

अभेत्यादि। यथा अर्केण सुप्रातेन सुप्रभातेन नीहाराद्यभावात् शोभनं प्रातरनेनेति सुप्रातः सुश्वेति समासान्तनिपातनं

शरन्मुखे शरदारम्भे अभायत दीप्यते स्म भावकर्म्मणोरिति भावे लङ् तदन्तेनाभायत पुरोऽग्रतो यदर्क्केण गम्यमानमवष्टभ्यमानं वर्त्मेत्यर्थात् कर्म्मण्यात्मनेपदं तेन हनूमता क्रामता गच्छता श्रितिक्रमइति दीर्घत्वं नागतमासीत् अपितु सर्व्वमेव गतमिति ॥ २॥

अभेत्यादि। शरन्मुखे शरदारम्भे सुप्रातेन सुप्रभातेनार्क्केण यथा अभायत दीप्यते स्म तथा तेन हनूमता अभायतेति सम्बन्धः भातेर्भावे घ्यामं शोभनं प्रातरस्येति सोऽस्यःप्रातर्भ्याडइति परः स्वमते प्रातरेव प्रातं स्वार्थेऽणः व्यटेर्लोपइति टिलोपः तेन समासः पुरोऽग्रतोऽर्क्केण गम्यमानं वर्त्मेत्यर्थात् क्रामता गच्छता तेन हनूमता अगतं नासीत् किन्तु गतमेव तेजसा वेगेन च हनूमतः सूर्य्यसाम्यमुक्तं गमेः कर्म्मणि शानः ॥ २॥

विथति व्यत्यतन्वातां मूर्त्ती हरिपयोनिधी। व्यत्यैतान्चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितं ॥ ३॥

वियेत्यादि। हरिपयोनिधी हनूमत्समुद्रौ मूर्त्ती स्वदेहौ वियत्याकाशे व्यत्यतन्वातां व्यतिविस्तारितवन्तौ तनोतेर्लङ् कर्त्तरि कर्म्मव्यतीहारइत्यात्मनेपदं उत्तमञ्च मार्गं अर्क्केन्द्रेन्दुनिषेवितं व्यत्यैतां व्यतिगतवन्तौ इणः परस्य लङ् कर्म्मव्यतीहारइत्यात्मनेपदं प्राप्तं नगतिहिंसार्थेभ्यइति गत्यर्थत्वात् प्रतिषिद्धं तेन तसस्तामादेशः तत्र हरेर्गच्छतः पुरतोयस्मिन्वियत्प्रदेशे स्वमूर्त्तिं विस्तारितुमवसरोभविता तत्र पयोनिधिरूर्म्मिभिः स्वमूर्तिं वितस्तार पयोनिधेश्च वेलातटञ्छतोयत्र स्वमर्त्तिं वितस्तार

तथा पयोनिधेर्यन्मार्गं गन्तुमवसरोभविता हरिरत्यस्य तं मार्गं गन्तुमैच्छत् यच्च हरेर्मार्गं गन्तुमवसरोभविता तं मार्गं पयोनिधिरभ्लिहै: र्मिभिरैच्छत् यच यत्क्रियावसरं क्रियां करोति सतच तत्क्रियाकारीत्युपचर्य्यते यथा देवदत्तसाध्यां क्रियां यज्ञदत्त: कुर्वन् तत्कारीत्युच्यते ततश्चेतरेणेतरसम्बन्धिन्या: क्रियाया: करणात् अन्यतरसम्बन्धिन्याश्चेतरकरणात्सम्भवति कर्मव्यतीहार: ॥ २ ॥

वियतीत्यादि। हरिपयोनिधी हनूमत्समुद्रौ वियत्याकाशे मूर्त्ती स्वदेहौ व्यत्यतन्वातां अन्योन्यं विस्तारितवन्तौ तन दुन्नविस्तृतौ व्यतीहारे गतिहिंसेत्यादिना मं सूर्य्येन्द्रचन्द्रनिषेवितं अतएव उत्तमं मार्गं आकाशं तौ व्यत्यैतां परस्परं जग्मतु: व्यतीहारे गतिहिंसाशब्दार्थहसान्येति गत्यर्थादिवर्ज्जनात् न व्यतीहारे मं द्वाभ्यां रूपं॥ ३ ॥

व्यतिजिग्ये समुद्रोऽपि न धैर्य्यन्तस्य गच्छत:। अगच्छत्वास्य न गतं प्रचण्डोऽपि प्रभञ्जन: ॥ ४ ॥

व्यतीत्यादि। तस्य हरेर्गच्छत: स्वदेहस्याल्पतां कर्त्तुं योऽवसरो भावी तत्र समुद्रोनातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं न जितं तदानीं तस्योद्धतकल्लोलत्वात् अपिशब्दाच्च हनूमानपि समुद्रस्य शान्तत्वं कर्त्तुं योऽवसरोभावी तत्र नातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं वा न जितं तदानीं तस्य विपुलकायत्वात् तदेवं हनूमत: समुद्रोहनूमानपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये नाभिवभूव

एकवचनस्य प्रत्येकाभिसम्बन्धात् कर्म्मव्यतीहारे पूर्व्ववदात्मनेपदं सँशिटोर्जेरिति कुलं तस्य हनूमतोगतं गमनं प्रचण्डोऽपि महान् प्रभञ्जनोवायुर्न व्यत्यगच्छत् न प्राप्तवान् ॥ ४ ॥

व्यतीत्यादि । गच्छतस्तस्य हनूमतोधैर्य्यं समुद्रोऽपि न व्यतिजिग्ये नाभिभूतवान् निर्भयत्वात् अपिशब्दात् सोऽपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये उद्वेगात् चोभेऽपि मर्य्यादालङ्घनात् एकवचनेऽपि उभयोरुभयापेचित्वाद्व्यतीहारः जेर्गिःसन्योरिति ग्यादेशः प्रचण्डोऽपि प्रभञ्जनोवायुरस्य हनूमतोगतं गमनं न अगच्छत् न प्राप्तवान् तस्यातिवेगत्वात् अस्येति स्वभावक्तेति भावक्तेन योगे कर्त्तरि षष्ठी ॥ ४ ॥

व्यतिघ्नतीं पथिघ्नन्तं राक्षसीं पवनात्मजः । जघान आविश्य वदनं निर्यान् भित्वोदरं द्रुतं ॥ ५ ॥

तस्यातिजवेन गच्छतः पथि राक्षसी संप्राप्ता तामसौ व्यापादितवानित्याह व्यतीत्यादि हनिष्याम्येनमिति राक्षस्याश्चावधकरणावसरः तत्र घ्नन् यः कश्चित्प्राप्तः तस्यैनां हनिष्यामीति योवधकरणावसरः तत्र घ्नतीन्तदेवमितरेतरक्रियाकरणेन व्यतिघ्नतीं राक्षसीं नगतीत्यादिना हिंसार्थत्वादात्मनेपदप्रतिषेधः तां पवनात्मजोहनूमान् जघान कथं वदनमाविश्य उदरम्भित्वा द्रुतं निर्यान् निर्गच्छन् यातेःशतरि रूपं ॥ ५ ॥

व्यतीत्यादि। पवनात्मजो हनूमान् गच्छन्नेव पथि संप्राप्तां राक्षसीं जघान किं कुर्व्वन् द्रुतं वदनं प्रविश्य उदरं भित्त्वा विदार्य्य निर्यान् निर्गच्छन् याति: शब्द: कीदृशीं घ्नन्तं जनं व्यतिघ्नतीं अन्योन्यं घ्नतीं हिंसार्थवर्ज्जनात् व्यतीहारेऽपि न मं॥ ५॥

अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान्।
उदन्वांश्चानिलोद्धूतोम्रियमाणा च राक्षसी॥ ६॥

अन्योन्यमित्यादि। अन्योन्यमित्यन्योन्यस्येत्यर्थः कर्म्मव्यतीहारे सर्व्वनाम्नोद्वे भवतोसमासवच्च बहुलं यदा नासमासवत् तदा पूर्व्वपदस्योत्तरपदस्य च प्रथमैकवचने स्त्रीनपुंसकयोराम भावइति वक्तव्यं अन्योन्यस्य सम्बन्धिभिः शब्दैः उदन्वद्राक्षसौ शब्दान् भीषणानात्मीयान् व्यतियुतः स्म मिश्रितवन्तौ युमिश्रणइत्यस्माल्लट् स्मइति भूते लट् इतरेतरेत्यादिना कर्म्मव्यतीहार आत्मनेपदप्रतिषेधः तत्रोदन्वतः शब्दकरणाद्योभीषणशब्दमिश्रणावसरोभावी तत्र राक्षसी म्रियमाणा शब्दान् भीषणानुदन्वच्छब्दैर्युयाव राक्षसाः शब्दकरणाद्योभीषणशब्दमिश्रणावसरो भावी तत्रोदन्वानिलोद्धूतः शब्दान् भीषणान् राक्षसीशब्दैर्युयाव॥ ६॥

अन्योन्यमित्यादि। तदानीं हनूमद्वेगेनानिलोद्धूतउदन्वान् समुद्रः म्रियमाणा राक्षसी उभावेतौ शब्दैर्भीषणान् शब्दान् अन्योन्यं व्यतियुतः स्म संमिश्रितवन्तौ युलमिश्रणे कीलेनातीतइति की अन्योन्यार्थे इत्युक्ते व्यतीहारेऽपि मं अन्योन्यार्थइति आप

कात् व्यतीहारेऽन्योन्यस्येमनीयादिलाक्षिपातिताः वहकस्य
वती लोकोपचारादुदनादेशः उदनुशब्दोऽप्यस्ति उक्तं हि पद
वयः इष्यतुशब्दाहत्योके इति ॥ ६ ॥

न्यविक्षत महाग्राहसङ्कुलं मकरालयं। सैका ब
हूनां कुर्व्वाणा सत्त्वानामाशितम्भवं ॥ ७ ॥

न्यवीत्यादि। महद्भिर्ग्राहैः सङ्कुलं मकरालयं समुद्रं न्यविक्षत
प्रविष्टवती नेर्व्विशइत्यात्मनेपदं शलइगुपधादनिटः क्सः बहूनां
सत्त्वानामेकापि सती आशितम्भवं सुहुप्तिं कुर्व्वाणा आशितेभुव
इति भावे खच् ॥ ७ ॥

न्यवीत्यादि। राचसी एकापि सती बहूनां सत्त्वानां कुम्भी
राणां आशितम्भवं सुहु हप्ततां महाशरीरत्वात् कुर्व्वाणा मक
रालयं समुद्रं न्यविक्षत प्रविष्टवती विपराभ्यामित्यादिना निपूर्व्ववि
शतेर्भ्वे चयधोऽनिमिजुकइति सक् कीदृशं महद्भिर्ग्राहैर्जलजन्तु
भिः संकुलं व्याप्तं आङ्पूर्व्वोऽश्नातिस्तृप्त्यर्थः भावेऽश्यतेभिनाभुव
इति खः ॥ ७ ॥

कृतेनोपकृतं वायोः परिक्रीणानमुत्थितं। पित्रा
संरक्षितं शक्रात्समैनाकाद्रिमैक्षत ॥ ८ ॥

कृतेत्यादि। सहनूमान् समुद्रादुत्थितं मैनाकाद्रिमैक्षत वायो
रुपकृतमुपकारकृतेन प्रत्युपकारेण परिक्रीणानं परिक्रयं विधि

मनां परिव्यवेभ्यः क्रिय इत्यकर्त्तभिप्रायविषये आत्मनेपदं पित्रा वायुना रक्षितं यक्मात् तेन हि पक्षच्छेदकाले मरुता वेगेन समुद्रे नीत्वा रक्षितइति श्रूयते ॥ ८ ॥

कृतेरित्यादि। यत्‌भूमान् समुद्रादुत्थितं मैनाकनामानमद्रिं ऐक्षत दृष्टवान् ईक्षङ् दर्शने ङानुबन्धात्मं कीदृशं यक्मात् पक्षच्छेदभयात् पित्रा वायुना संरक्षितं अतएव वायोरुपकृतं उपकारं कृतेन प्रत्युपकारेण परिक्रीणानं परिवर्त्तयन्तं विपराजीति परि पूर्व्वक्रीञोमं ग्रामः ॥ ८ ॥

त्वं पराजयमानोऽसावुन्नत्या पवनात्मजं। जगा दाद्रिर्विजेषीष्ठामयि विश्रम्य वैरिणं ॥ ९ ॥

त्वमित्यादि। असावद्रिः उन्नत्या उन्नततया त्वम्पराजयमानोऽभिभवन् पवनात्मजं जगाद मयि विश्रम्य स्थित्वा वैरिणं शत्रुं विजेषीष्ठाः त्वमभिभूयाः आशिषि लिङ् उभयत्रापि विपराभ्यांजेरिति तङ् ॥ ९ ॥

त्वमित्यादि। असौ अद्रिः पवनात्मजं जगाद कीदृशः सन् उन्नत्या उच्चतया त्वमाकाशं पराजयमानः अभिभवन् विपराजीति मं किं जगादेत्याह मयि विश्रम्य विश्रामं कृत्वा वैरिणं विजेषीष्ठाः अभिभूयाः त्वाशिषि पूर्व्ववन्मं ॥ ९ ॥

फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु। साधु संक्रीडमानानि पश्य वृन्दानि पक्षिणां ॥ १० ॥

फलानीत्यादि। चित्राणि नानाविधानि फलानि आदत्स्व गृहाण आङो दोनास्यविहरणइत्यात्मनेपदं सानुषु अनेकदेशेषु परिक्रीडस्व विहर पक्षिणाञ्च वृन्दानि साधु शोभनं अनुक्रीड मानानि विहरन्ति सन्ति पश्य उभयत्र क्रीडोऽनुसम्परिभ्यश्चेति तङ्। १०॥

फलेत्यादि। चित्राणि अद्भुतानि फलानि त्वमादत्स्व गृहाण आदाओऽस्यप्रसारे इति सं आत्मनेपदी आङ्पूर्वस्यायं ग्रस्वेत्यादि सम सानुषु एकदेशेषु परिक्रीडस्व विहर पर्य्यन्ववाङ्: क्रीडइति सं पक्षिणां वृन्दानि पश्य कीदृशानि साधु शोभनं अनुक्रीडमाना नि विहरन्ति पूर्व्ववत्सं॥ १०॥

क्षणं भद्रावतिष्ठस्व ततः प्रस्थास्यसे पुनः। न तत्संस्थास्यते कार्य्यं दक्षेणोरीकृतं त्वया॥ ११॥

क्षणमित्यादि। हे भद्र कल्याण क्षणमवतिष्ठस्व ततः पश्चात् प्रस्थास्यसे यास्यसि यच्च कार्य्यं करणीयं दक्षेणानलसेन त्वया ऊरीकृतमङ्गीकृतं न च संस्थास्यते अपितु निष्पत्स्यतएवेत्यर्थः समवप्रविभ्यस्थः इति तङ्॥ ११॥

क्षणमित्यादि। हे भद्र कल्याणयुक्त त्वं क्षणं अवतिष्ठस्व ततः पुनः प्रस्थास्यसे यास्यसि दक्षेण अनलसेन त्वया ऊरीकृतं अङ्गी कृतं कार्य्यं न च संस्थास्यते न नाशं गमिष्यति सम्पत्स्यतएवेति भावः प्रतिज्ञानिर्णयेत्यादिना अवसंप्रपूर्व्वतिष्ठतेस्तङ्॥ ११॥

त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयं। उत्तिष्ठमानं मित्रार्थे कस्त्वां न वक्तुं मन्यते॥१२॥

त्वयीत्यादि। त्वयि विषये अस्माकं प्रीतिरस्ति तेन संशये अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्तु नोऽस्माकं प्रीतिरेव निर्णयं पश्यन्ती त्वयि तिष्ठते प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं विवादपदनिर्णेता स्थेय उच्यते तुभ्यन्तिष्ठामहे वयमिति त्वयि विषये अस्माकं चेतो वर्त्तत इति स्वाभिप्रायं तुभ्यं तिष्ठामहे स्वाभिप्रायं निवेदयाम इत्यर्थः अत्र प्रकाशनस्य स्वाभिप्रायकथनं श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान इति सम्प्रदानसंज्ञायां चतुर्थी कस्मादेवं मां श्लाघस इति चेदाह उत्तिष्ठमानं यतमानं उदोऽनूर्द्ध्वकर्म्मणीत्यात्मनेपदं कस्त्वां न वक्तुमन्यते न श्लाघते॥१२॥

त्वयीत्यादि। त्वयि नोऽस्माकं प्रीतिस्तिष्ठते निश्चयेनास्ति तद्विषयेऽस्माकं प्रीतिरस्ति न वेति सन्देहे अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्त्वस्माकं प्रीतिरेव त्वां निर्णेतारं करोतीति निर्णयार्थोऽत्र स्थाधातुः त्वमस्मदाशीन वेत्यत्र त्वद्विषये प्रीतिर्निर्णयं करोतीत्यन्ये वयं तुभ्यं तिष्ठामहे स्थित्वा स्वाभिप्रायं प्रकाशयामः प्रकाशार्थोऽत्र स्थाधातुः यस्मैदित्सेत्यादिना संप्रदानत्वं प्रतिज्ञानिर्णयेत्यादिना संज्ञत्र प्रकाशः स्वाभिप्रायकथनं कथं मत्स्यं श्लाघस इत्याह मित्रार्थे रामार्थे उत्तिष्ठमानं यतमानं त्वां कोन वक्तुं मन्यते न श्लाघते अपि तु सर्व्व एव उदोऽनूर्द्ध्वेहे इति सं॥१२॥

ये सूर्य्यमुपतिष्ठन्ते मन्त्रैः सन्ध्याचयं द्विजाः। रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना॥१३॥

यइत्यादि । ये द्विजामन्त्रैः करणभूतैः सूर्य्यमुपतिष्ठन्ते प्रत्युपासते उपान्मन्त्रकरणइत्यात्मनेपदं सन्ध्यात्रयं त्रिसन्ध्यं अत्यन्तसंयोगे द्वितीया तेऽपि रक्षोभिस्तापिताः उपद्रुताः अधुना ते सिद्धिं ध्यायन्ति किंपुनरहं यत्ते पितुः सुहृत् तदेव दर्शयन्नाह ॥ १२ ॥

यइत्यादि । ये द्विजाब्राह्मणामन्त्रैः करणभूतैः सन्ध्यात्रयं व्याप्य सूर्य्यमुपतिष्ठन्ते उपासते मन्त्रेणोपादिति सं तेऽपि द्विजार क्षोभिस्तापिताउपद्रुताः सन्तः अधुना इदानीं तव सिद्धिं ध्यायन्ति चिन्तयन्ति अहन्तु तव पितुः सुहृत् सुतरां तथेति भावः यद्वा द्विजानुकूलत्वादपि त्वं साध्यइति भावः सन्ध्यात्रयमिति सदा ध्यादीति द्वितीया ॥ १२ ॥

अव्यग्रमुपतिष्ठस्व वीर वायोरहं सुहृत् । रवि र्वितपतेऽत्यर्थमाश्वस्य मयि गम्यतां ॥ १४ ॥

अव्येत्यादि । हे वीर अव्यग्रमनाकुलं मय्युपतिष्ठस्व सन्निहि तो भव अकर्म्मकाच्चेत्यात्मनेपदं यतोवायोस्तव पितुरहं सुहृत् रविरत्यर्थं वितपते दीप्यते उद्विभ्यामित्यात्मनेपदं तत्राकर्म्म कादिति वर्त्तते तस्मादाश्वस्य विश्रम्य गम्यतां ॥ १४ ॥

अव्येत्यादि । हे वीर अव्यग्रमनाकुलं यथा स्यात्तथा त्वमुप तिष्ठस्व सन्निहितोभव अकर्मकादिति सं यतोऽहं वायोस्तव पितुः सुहृन्मित्रं विश्रामौचित्यं दर्शयति रविरत्यर्थं वितपते दीप्यते व्युत्तपइति सं अकत्वात् अतएव मयि आश्वस्य प्राप्तनिर्वृतिं प्राप्य त्वया गम्यतां ॥ १४ ॥

तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः। आघ्नान इव सन्दीप्तैरलातैः सर्व्वतोमुहुः॥ १५॥

तीव्रेत्यादि। तीव्रं सुष्ठु उत्तपमानोद्दीप्यमान आतपः सोढुमशक्यः पूर्व्ववदात्मनेपदं अलातैः उल्मुकैः सन्दीप्तैः सर्व्वत आघ्नान इव ताडयन्निव आङोयमहन इत्यविवक्षितकर्म्मकत्वादात्मनेपदं गमहनेत्युपधालोपः होहन्तेरिति कुत्वं॥ १५॥

तीव्रेत्यादि। पुनर्व्विश्रामार्थीचिन्त्यमाह तीव्रमुत्तपमानोद्दीप्यमानोऽयमातपः सोढुं न शक्यः पूर्व्ववन्मे सन्दीप्तैरलातैरङ्गारैर्मुहुर्व्वारं वारं सर्व्वतआघ्नान इव ताडयन्निव आत्मनिक्रियायां आहनयमइति मं अविवक्षितकर्म्मत्वात् अङ्गारोऽलातमुल्मुकमित्यमरः आलातैरिति पाठे स्वार्थे ष्णः विद्यादलातमालातमिति द्विरूपकोषः॥ १५॥

संशृणुष्व कपे मत्कैः सङ्गच्छस्व वनैः शुभैः। समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागते॥ १६॥

संशृणुष्वेत्यादि। हे कपे संशृणुष्व आकर्णय समोगमृच्छीत्यादि विवक्षितकर्म्मकत्वादात्मनेपदं शुभैः शोभमानैः इगुपधलक्षणः कः वनैर्मत्कैः मत्स्वामिकैः अहं स्वामी येषामिति यएषां यामकौ रिति कः प्रत्ययोत्तरपदयोश्चेति मदादेशः सङ्गच्छस्व सङ्गतो भव पूर्व्ववदात्मनेपदं समारन्त ममाभीष्टा इति ममाभिप्रेताः

सङ्कल्पा अभिप्रायाः कदा नु मे सुहृत्तया वा कश्चिदेष्यति यस्या हमुपयोगी स्यामिति ते समारन्त आगताः त्वय्युपागते सति अर्त्तेर्लुङि पूर्व्ववदात्मनेपदं सर्त्तिशास्त्यर्त्तिभ्यश्चेत्यङि ऋदृशोऽङि गुणः आङजादीनाम् भाषाविषयस्य प्रयोगः ॥ १६ ॥

समित्यादि । हे कपे संशृणुष्व आकर्णय मत्कैर्मत्स्वामिकैः शुभैः शोभमानैर्निर्भयत्वेन कल्याणयुक्तैर्व्वा वनैः सह सङ्गच्छस्व सङ्गतोभव अहं स्वामी येषामिति विकारसंघेत्यादिना कः समे मामी त्यर्थे वा त्वयि उपागते सति ममाभीष्टावाञ्छिताः सङ्कल्पा अभिप्रायाः सुहृद्दर्शनादिरूपाः समारन्त सङ्गतवन्तः ऋगतौ सर्व्वत्र समोगम्यृच्छीत्यादिना सं ओः श्रुर्वे इति श्रुः जिस्त्र वत्स्यस्येत्यादिना अर्त्तेर्ङः हस्वोर्णुरिति गुणः ॥ १६ ॥

के न संविद्रते वायोर्मैनाकाद्रिर्यथा सखा । यत्ना दुपाह्वये प्रीतः संह्वयस्व विवक्षितं ॥१७॥

ननैवमिथ्या वायुर्मे सुहृदित्याह केनेत्यादि । वायोर्मैनाकाद्रिर्य था सखेति के न संविद्रते न जानन्ति वेत्तेः पूर्व्ववदात्मनेपदं वेत्तेर्वि भाषेति रुट् तस्मात्प्रीतः सन् अहं यत्नादुपाह्वये भवन्तमाह्वयामि ततः संह्वयस्व कथय विवक्षितमभिप्रेतं निसमुपविभ्यो ह्वः इत्यकर्त्रं भिप्राये लट्लोटोरात्मनेपदं ततोऽकर्म्मकादिति निवृत्तं सामा न्येन विधानं ॥ १७ ॥

केनेत्यादि । मत्पितुः सखा त्वमसीति किं प्रमाणमित्याशङ्क्याह मैनाकाद्रिर्व्वायोर्यथा सखा तथा के जनाः न संविद्रते न जानन्ति

अपि तु सर्व्वएव समागच्छन्तीति मं अविवक्षितकर्म्मत्वात् जग्मो रमिति रम् अत एवाहं प्रीतः सन् यत्नादुपाकुरुषे तामाकुर्यामि त्वमपि विरचितं यत्नमिष्टं संकुरु संकथय इति जगादाद्रिरिति सम्बन्धः निसंस्युपस्कृ इति मं ॥ १७ ॥

द्यामिवाह्वयमानन्तमवोचद्भूधरं कपिः। उपकुर्व्वन्तमत्यर्थं प्रकुर्व्वाणोऽनुजीविवत् ॥ १८ ॥

द्यामित्यादि। द्यामिवाकाशमिवाह्वयमानं महत्तया स्पर्द्धमानं स्पर्द्धायामाङ् इत्यात्मनेपदं अत्यर्थमुपकुर्व्वन्तं आतिथ्येन तमीदृशं भूधरमवोचत् कपिः प्रकुर्व्वाणः सेवमानोऽनुजीविवत् भृत्यवत् गन्धनेत्यादिना सेवने तङ् ॥ १८ ॥

द्यामित्यादि। कपिर्हनूमान् तं भूधरं मैनाकं पर्व्वतं अवोचत् उक्तवान् कीदृशं द्यामाकाशमाह्वयमानमिव महत्त्वेन स्पर्द्धमानमिव स्पर्द्धायामाङ् इति मं अत्यर्थमुपकुर्व्वाणमुपकारिणं कीदृशः कपिः अनुजीविवत् भृत्यवत् प्रकुर्व्वाणः सेवमानः गन्धनावक्षेपणेत्यादिना सेवायां मं ॥ १८ ॥

कुलभार्य्यां प्रकुर्व्वाणमहं द्रष्टुं दशाननं। यामि त्वरावान् शैलेन्द्र मा कस्यचिदुपस्कृथाः ॥ १९ ॥

कुलेत्यादि। अहं दशाननं द्रष्टुं यामि कुलभार्य्यां प्रकुर्व्वाणं कुलनारीमभिगच्छन्तं तस्यां सहसा प्रवर्त्तमानमित्यर्थः साह

विकर्षे तङ् त्वरावान् त्वरायुक्तः अतः शैलेन्द्र मा कस्यचिद् अशनपा नादिकस्य उपस्कृथाः अतिशयवत्त्वमाकार्षीरित्यर्थः माङिलुङ् प्रतियत्ने तङ् तनादिभ्यस्तथासोरिति सिचोलुक् उपात्प्रतियत्न इति सुट् कस्यचिदिति कृञः प्रतियत्नइति कर्म्मणि षष्ठी ॥ १८ ॥

कुलेत्यादि। किमवोचदित्याह हे शैलेन्द्र अहं त्वरायुक्तः सन् दशाननं द्रष्टुं यामि कीदृशं कुलभार्य्यां कुलपालिकां प्रकुर्व्वाणं साहसेनाभिगच्छन्तं तस्यां साहसात्प्रवर्त्तमानमित्यर्थः सूचनावक्षेपणेत्यादिना साहसे मं कुलस्त्री कुलपालिकेत्यमरः अतएव कस्यचित् मा उपस्कृथाः कस्यापि द्रव्यस्य भोज्यस्य पेयस्य वा मदर्थे प्रतियत्नं न कुरु पूर्व्वेण प्रतियत्ने मं सतोगुणा न्तराधानं प्रतियत्नः उत्कर्षसमीहा प्रतियत्नमिति केचित् सम्परेः सुमुपादिति सुम् अस्त्वाकृसीति सेर्लोपः कस्यचिदिति समार्थे नेत्यादिना कर्म्मणि षष्ठी एधोदकस्योपस्कुरुतइत्युदाहरता प्रतियत्ने कृञः कर्म्मणि न द्वितीया इति सूचितं गुणोत्कर्षे कृञः कर्म्मणि षष्ठीति परः ॥ १८ ॥

योऽपचक्रे वनात्सीतामधिचक्रे न यं हरिः। विकुर्व्वाणः स्वरानद्य बलं तस्य निहन्म्यहं ॥ २० ॥

योऽपेत्यादि। यः सीतामपचक्रे अभिबभूव अवक्षेपणे तङ् वनादिति वनमुपगम्य ल्यब्लोपे कर्म्मणि पञ्चमी यं हरिरिन्द्रोनाधिचक्रे न प्रसेहे अधेःप्रसहनइति तङ् तस्य बलं दशाननस्य सामर्थ्यं

कीदृशं स्वरान् विकुर्व्वाणं विविधान् स्वरान् कुर्व्वाणं वेःशब्दकर्म्म णइति तङ् तस्य दशाननस्य बलं निहन्मि ॥ २० ॥

यइत्यादि। यौवनात् सीतामपचक्रे प्रतिभूतवान् सूचना वचेपणेत्यादिना अवचेपणे मं सूचनेममिति केचित् तदापकारं प्रयुज्य हिंसां सूचयतीत्यर्थः वनादिति हेतौ पञ्चमी वनं प्राप्येति यवर्थे वा हरिरिन्द्रोयं नाधिचक्रे नाभिभूतवान् अधेः शक्ताविति मं शक्तिरभिभवः तस्य दशाननस्य बलं शक्तिमहमद्य निहन्मि कीदृशः स्वरान् विविधान् कुर्व्वाणः द्वितीयान्तपाठे यमित्यस्य विशेषणं शब्दढाढादेरिति मं ॥ २० ॥

विकुर्व्वे नगरे तस्य पापस्याद्य रघुद्विषः। विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः ॥ २१ ॥

विकुर्व्वइत्यादि। तस्य रघुद्विषोरामशत्रोः पापस्य नगरे पुर्य्यां अहमद्य विकुर्व्वे विविधं चेष्टे अकर्म्मकाच्चेति तङ् तत्र विकुर्व्वाणोयदि वा प्रियानपि प्राणान् स्वाम्यर्थे विनेष्ये अपनेष्यामि संमाननेत्यादिना व्यये तङ् यतोधर्म्मादिषु विनियोगोव्ययः यशो वा उदानेष्ये ऊर्द्धं नेष्यामि तस्यापकारकरणात् अत्रोत्सञ्जने तङ् उत्सञ्जनमुत्चेपणं ॥ २१ ॥

विकुर्व्वइत्यादि। तस्य पापाचारस्य रघूणां रामादीनां द्विषोरावणस्य नगरे लङ्कायां अहमद्य विकुर्व्वे विविधं चेष्टे शब्दढाढादेरिति अकर्म्मकत्वान्मं तत्र च विकुर्व्वाणोऽहं प्रिया

नपि शक्तान् वा विनेष्ये स्वामर्षं त्यक्ष्यामि आत्मार्थात्क्षेपरत्या दिना व्ययार्थे शं व्ययो धर्म्मादिषु विनियोगः अथवा यज्ञ उदानेष्ये ऊर्द्ध्वं नेष्यामि पूर्व्वेण क्षेपणे शं ॥ २१ ॥

विनेष्ये क्रोधमथवा क्रममाणोऽरिसंसदि। इत्यु
क्त्वा खे पराक्रंस्त तूर्णं सूनुर्नभस्वतः ॥ २२ ॥

विनेष्य इत्यादि। यदि वा क्रोधमात्मनो विनेष्ये अपनेष्यामि कर्त्तृस्थेति तङ् कर्त्तृस्थस्य क्रोधकर्म्मणोऽशरीरत्वात् अत्र व्ययो न सम्भवतीति अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन प्रवर्त्तमानः वृत्तिसर्गेत्यादिना वृत्तौ तङ् वृत्तिरप्रतिबन्धः इत्येवमुक्त्वा सूनुर्नभस्वतः वायोस्तनयः खे तूर्णं पराक्रंस्त शीघ्रमुत्सेहे उपपराभ्यामित्यनेन सर्गे तङ् सर्ग उत्साहः ॥ २२ ॥

विनेष्य इत्यादि। अथवा क्रोधं विनेष्ये अपनेष्यामि शत्रुहननात् यस्मात् मूर्त्तत्वादिति शं अमूर्त्तमशरीरं कर्त्तृस्थादुक्तकर्म्मकाद्विपूर्व्वनीञ आत्मनेपदमिति विद्यासागरः स्वमतेऽपि शब्दढाढादेरित्यतो मण्डूकप्लुत्या नेरित्यनुवर्त्तते इति वाच्यं क्रोधं विनयत इत्युदाहरणदर्शनात् अन्ये तु विपूर्व्वत्वं न वदन्ति तन्न साधु विगणय्य नयन्ति पौरुषं विहितक्रोधजयाजिगीषव इत्यादिदर्शनात् किं कुर्व्वन् अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन चेष्टमानः वृत्त्युत्साहेत्यादिना शं वृत्तिरप्रतिबन्धः इत्येवमुक्त्वा नभस्वतो वायोः सूनुः पुत्रो हनूमान् खे आकाशे तूर्णं शीघ्रं परा

क्रांस उत्साहं चकार पूर्व्वेयोरक्षाहे क्रांमास्ताक्रनकषोऽभोत्वाह: लुक्रमोऽमे इति नेम् ॥ २२ ॥

परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमं। दिवमाक्रममाणेव केतुताराभयप्रदा ॥ २३ ॥

परीत्यादि। तस्य हनूमतोविक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सेहे पूर्व्ववत्तङ् दिवमाक्रममाणेव यथा केतुः स्वर्भानुः तारा नभस्युद्गच्छति भयङ्करा आङउद्गमनइति तङ् तत्र हि ज्योतिरुद्गमनइत्युक्तं केतुताराया‌श्च ज्योतिःस्वभावत्वात् ॥ २३ ॥

परीत्यादि। तस्य हनूमतोविक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सहते स्म पूर्व्ववत्तं दिवमाकाशमाक्रममाणा उद्गम पूर्व्वकं प्राप्नुवती केतुस्वभावा तारेव भयप्रदा भयं प्रददातीति हनजनादिति डः आङोभोद्गमइति मं आक्रामति धूमः खमित्यत्र उद्गमोन विवक्ष्यते किन्तु व्याप्तिमात्रं ॥ २३ ॥

जले विक्रममाणायाहनूमान् शतयोजनं। आस्यं प्रविश्य निरगादणूभूयाप्रचेतितः ॥ २४ ॥

जलइत्यादि। विक्रममाणयाः पद्भ्यां विचरन्त्याः वेःपादविहरणइति तङ् जलग्रहणात् गतिविशेषन्दर्शयति आस्यं शतयोजनं शतं योजनानि यस्य प्रमाणतः तदणूभूय सूक्ष्मीभूय प्रविश्य

निरगात् निर्गत उदरं विदार्य्येत्यर्थात् अप्रचेतितः अविज्ञातः ॥ २४ ॥

जलइत्यादि । जले विक्रममाणायाः पद्भ्यां विहरन्त्याराचस्याः शतयोजनमास्यं प्रविश्य हनूमान् अणूभूय सूक्ष्मीभूय अप्रचेतितस्तया अपरिज्ञातः सन् निरगात् निर्गतः कर्णपथेनेत्यर्थात् उदरं भित्त्वेत्यन्ये तत्तु रामायणविरुद्धं शतं योजनानि प्रमाणतोयस्येति विग्रहः वेःपद्भिरिति मं पद्भिरिति वङ्गलनिर्देशेन पादमात्रस्य करणत्वे वेःक्रमोममिति बोध्यं न तु साधु विक्रमते वाजीत्युदाहरणदर्शनात् वङ्पादकरणत्वं वाच्यं वेःपद्भ्यामिति कातन्त्रसूत्रे द्वित्वमुपलक्षणंतेन तन्मते साधु विक्रमते वाजीत्यादिसिद्धं ॥ २४ ॥

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटं । उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः ॥ २५ ॥

द्रष्टुमित्यादि । असौ हनूमान् सीतां द्रष्टुं प्रक्रममाणः आरभमाणः आदिकर्म्म यथा भोक्तुं प्रक्रमतेइति उदधेस्तटमुपाक्रंस्त गन्तुं प्रारब्धवानित्यर्थः ततश्च प्रोपयोरादिकर्म्मणि समानार्थत्वात् प्रोपाभ्यांसमार्थाभ्यामिति तङ् घोरैः रौद्रैः निशाचरैराकुलं व्याप्तं तटं क्रममाणैः इतस्ततोगच्छद्भिः अनुपसर्गाद्वेति तङ् ॥ २५ ॥

द्रष्टुमित्यादि । असौ हनमान् निर्गतः सन् सीतां द्रष्टुं प्रक्रममाणआरभमाणउदधेस्तटमुपाक्रंस्त गन्तुमारभते स्म यद्यपि

भोक्तुमुपक्रमते इत्यादावारम्भमात्रमुपक्रमेरर्थस्तथापीह गमना रम्भोवाच्यः लाक्षणिकत्वात् द्रष्टुमित्यस्यानुषङ्गेन अम्भोनिधेस्त टमुपाक्रंस्तेति वा प्रोपाद्दारम्भेइति मं घोरैर्भयानकैर्निशाचरै राकुलं व्याप्तं क्रममाणैरितस्ततोगच्छद्भिः वानरैरिति मं॥ २५॥

आत्मानमपजानानः शशमात्रोऽनयद्दिनं। शा स्थे रात्राविति प्राज्ञः प्रत्यज्ञास्त क्रियापटुः॥ २६॥

आत्मेत्यादि। मा कश्चिज्ज्ञासीदिति तथाविधमात्मानं शरी रमवजानानः अपह्नुवानः अपह्नवेज्ञइति तङ् योहि शशमात्रो भूत्वा स्थितः तेन कथमात्मा लोके नापलपितः स्यात् अनयद्दि नं अगमयद्दिवसं शास्थे रात्राविति प्रत्यज्ञास्त प्रतिज्ञातवानि त्यर्थः सम्प्रतिभ्यामनाध्यानइत्यात्मनेपदं लुङ्भवति आत्मान मोत्कण्ठनं शास्येइत्यकर्म्मकाचेत्यकर्म्मकक्रियावचनत्वादात्मने पदं प्राज्ञः क्रियापटुरिति बुद्धिकौशलं कर्म्मकौशलञ्च दर्शयति ॥ २६॥

आत्मानमित्यादि। असौ शशमात्रः शशपरिमाणोभूत्वा दिनमनयत् गमयामास द्घ्नमात्रद्वयसट्मानेइति मात्रट् कथं तथाविधस्याल्पकायत्वमित्याह आत्मानमपजानानः अपह्नुवानः निह्नवेज्ञइति मं रात्रावहं शास्येइति प्रत्यज्ञास्त प्रतिज्ञातवान् संप्रतेरस्मृताविति मं शास्येइति अठादिति मं अविवक्षितकर्म्म त्वात् त्रिङ्ह्यन्तेत्यादिना वा प्राज्ञः क्रियापटुरिति पदद्वयेन बुद्धिकौशलं क्रियाकौशलञ्च दर्शितं॥ २६॥

संजानानान् परिहरन् रावणानुचरान् बहून्।
लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमां ॥ २७ ॥

संज्ञेत्यादि। रावणस्यार्थेषु कार्य्येषु ये चरन्तीति चरेटः तान् बहून् सञ्जानानान् चेतयतः परिहरन् अनाध्याने तङ् रात्रौ लङ्कां समाविशत् प्रविष्टवान् अरिदुर्गमां शत्रुदुर्गमां वदमानो भासमानः भासनोपसम्भाषेत्यादिना आत्मनेपदं ॥ २७ ॥

समित्यादि। असौ हनूमान् रात्रौ लङ्कायां समाविशत् प्रविष्टवान् कीदृशः वदमानः शोभमानो वदन् शोभोपलक्षितं शोभाहेतुकं वा यथा स्यात्तथा कथयन् वा ज्ञानयत्नप्रलोभेवद इति मे ज्ञानपदेन ज्ञानपूर्व्वकत्वात् शोभाप्युच्यत इति कातन्त्रटीकायां व्याख्यातत्वात् प्रकाशनादौ वद इति क्रमदीश्वरसूत्रदर्शनाच्च शोभा च वदत्यर्थस्य लक्षणभावेन हेतुभावेन वा विशेषणं न तु तन्मात्रं वाच्यमिति न्यासः बहून् रावणस्यानुचरान् सेवकान् परिहरन् कीदृशान् संजानानान् चेतयमानान् संप्रतेरस्मृताविति मं कीदृशीं लङ्कां अरिदुर्गमां शत्रुभिर्दुष्प्रापां ॥ २७ ॥

कञ्चिन्नोपावदिष्टासौ केनचिद्व्यवदिष्ट न। शृण्वन् संप्रवदमानाद्रावणस्य गुणान् जनात् ॥ २८ ॥

कञ्चिदित्यादि। असौ प्रविष्टः सन् न कञ्चिदुपावदिष्ट उपसान्त्वितवान् उपसम्भाषायां तङ् केनचिद्व्यवदिष्ट न न भाषितवान् विमतौ तङ् विमतिर्नानामतिः संशृण्वन् आकर्णयन् जनात् प्रवद

माणात् रावणस्य सम्बन्धिनो गुणान् सम्भूय भाषमाणान् व्यक्तवाचामित्यात्मनेपदं जनानां व्यक्तवाक्यं॥ २८॥

किञ्चिदित्यादि। असौ हनूमान् प्रविष्टः सन् न किञ्चिदुपावदिष्ट न किञ्चित्प्रलोभनवाक्यं भाषते स्म भानयनेत्यादिना प्रलोभे मं केनचित् सह न व्यवदिष्ट नानामतिपूर्व्वकं विचित्रं न भाषते स्म विमतिपूर्व्वकं विचित्रकथनमत्र वदत्यर्थः विमतिव्यक्तसहोक्त्योरिति विमतौ मं संप्रवदमानात् सम्भूय व्यक्तं भाषमाणात् जनात् रावणस्य गुणान् शृण्वन् पूर्व्वेण व्यक्तसहोक्तौ मं॥ २८॥

जल्पितोत्क्रुष्टसङ्गीतप्रनृत्तस्मितवल्गितैः। घोषस्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः॥ २९॥

जल्पीत्यादि। पूतक्रतोरिन्द्रस्य या पूः तस्याश्च अमरावत्याः सम्बन्धिनो घोषस्यान्ववदिष्टेव लङ्का अनुशब्दः सादृश्ये सदृशं वादं कृतवती तैर्जल्पितादिभिः उभयत्रापि जल्पितादिघोषस्य तुल्यत्वात् लङ्केति तत्स्थोजनउच्यते तेन व्यक्तवाग्विषयत्वात् अनोरकर्म्मकादिति तङ् तत्र व्यक्तवाचामिति अनुवर्त्तते न समुच्चारणइति॥ २९॥

जल्पितइत्यादि। लङ्का जल्पितादिभिः पूतक्रतोरिन्द्रस्य पुरोऽमरावत्याघोषस्य शब्दस्य अन्ववदिष्टेव सदृशभाषणं कृतवतीव उभयत्रापि जल्पितादिघोषणानां तुल्यत्वात् अनुशब्दः सदृशभाषणद्योतकः तद्गतजनानां भाषणेन तद्भाषणमुत्प्रेक्ष्यते अनोरकर्म्मकादिति मं अनुपूर्व्वादकर्म्मकाद्वदेस्तौ व्यक्तवाचामात्मनेपदमिति

केचित् तस्मात् लङ्काशब्देन लक्षया लङ्कास्थितजन उच्यते व्यक्तवाचामिति तु वोपदेवेन नाङ्गीकृतं अनोरकर्म्मकइति कातन्त्रसूचेऽपि व्यक्तवाचामित्यस्य सम्बन्धोनाङ्गीकृतः जल्पितं व्यक्तभाषणं उत्कुष्टमाक्रानं सङ्गीतं सम्यक् गानं प्रनृत्तं नर्त्तनशब्दः स्मितं चास्यशब्दः वल्गितं मत्तवचनं ॥ २८ ॥

ऐद्विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः। तथाव गिरमाणैश्च पिशाचैर्मांसशोणितं ॥ ३० ॥

ऐदित्यादि। तां ब्रह्मराक्षसैः संयुक्तां हनूमानैत् जगाम द्रुणोर्लङ्घ रूपं विप्रवदमानैः परस्परविरुद्धार्थाभिधायिभिः विप्रलापात्मके व्यक्तवाचां समुच्चारणे विभाषाविप्रलापइति तङ् तथा पिशाचैर्मांसशोणितमवगिरमाणैः भक्षयद्भिः संयुक्तां गिरतेरभ्यवहारार्थत्वादवाङ्गइति तङ् मांसशोणितमिति जातिरप्राणिनामित्येकवद्भावः ॥ ३० ॥

ऐदित्यादि। हनूमान् तां लङ्कां ऐत् गतवान् द्रुणोर्ध्यां रूपं कीदृशीं ब्रह्मस्वरूपैस्तत्सम्बन्धिभिर्व्वा राक्षसैः संयुक्तां कीदृशैः विप्रवदमानैः सम्भूय विरुद्धप्रलापिभिः एकोयादृक् वदति अपरस्तादृक् न वदति वितण्डां कुर्व्वद्भिरित्यर्थः तचोगेवेति सं तद्धागइति तयोः पूर्व्वोक्तयोः विमतिव्यक्तवचोस्त्वयोर्योगे युगपत्प्रवृत्तौ विमतिरिह विरुद्धप्रलापमात्रं तथा पिशाचैः संयुक्तां कीदृशैर्मांसशोणितञ्चावगिरमाणैर्भक्षयद्भिः अवाङ्गिरतेरिति सं मांस

शोणितमिति समाहारद्वन्द्वः पिशितमश्नातीति पिशाचोऽसृक्पीपा
दित्वात्क्रव्यवान् ॥२० ॥

यथास्वं सङ्गिरन्ते स्म गोष्ठीषु स्वामिनोगुणान् ।
पानशौण्डाः पथः क्षीवावृन्दैरुदचरन्त च ॥ २१ ॥

यथेत्यादि । ब्रह्मराक्षसाः पिशाचाश्च यथास्वमात्मीयस्य स्वामिनोगुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः समः प्रतिज्ञानइति तङ् पानशौण्डाः पानासक्ताः क्षीवामत्ताः सन्तः पथोमार्गानुदचरन्त उत्क्रम्य गच्छन्ति स्म उदश्चरःसकर्मकादिति तङ् वृन्दैरिति सम्भूयेत्यर्थः ॥ २१ ॥

यथेत्यादि । ब्रह्मराक्षसाः पिशाचाश्च यथास्वं स्वीयस्य स्वामिनोगुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः समः प्रतिज्ञायामिति मं पाने शौण्डाश्च आसक्ताः अतएव क्षीवाः मत्ताः सन्तः वृन्दैः सम्भूय पथोमार्गान् उदचरन्त उत्क्रम्य जग्मुः उदश्चरःसकादिति मं ॥ २१ ॥

यानैः समचरन्तान्ये कुञ्जराश्वरथादिभिः । संप्रा
यच्छन्त वन्दीभिरन्ये पुष्पफलं शुभं ॥ २२ ॥

यानैरित्यादि ॥ अन्ये यानैः कुञ्जरादिभिः समचरन्त सञ्चरन्ति स्म समस्तृतीयायुक्तादिति तङ् अन्ये वन्दीभिरानीताभिः सम्प्रदाने तृतीया अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वच

मादन्तीभ्य इत्यर्थः पुष्पफलं शोभनं सम्प्रायच्छन्त ददति स्म दाण सम्प्रदाने चतुर्थ्यर्थ इति तङ् पुष्पफलमिति जातेरेकवद्भावः॥ ३२॥

यानैरित्यादि। अन्ये कुञ्जरादिभिर्यानैः समचरन्त सञ्चरन्ते स्म समस्त्येति सं अन्ये शुभं शोभनं पुष्पं फलञ्च वन्दीभिः हठहृतस्त्रीभिः संप्रायच्छन्त संप्रददुः वन्दानोभेऽधर्म्मेनित्यमिति संप्रदाने तृतीया वन्दीभिः सह विहरणेच्छया ताभ्यो ददुरित्यधर्म्मः दाणःप्राचेच्च्यर्थे इति सं सेत्यनेन समस्त्येत्यस्मात् ची आक्रम्यते॥ ३२॥

कोपात्काश्चित्प्रियैः प्रत्तमुपायंसत नासवं। प्रेम जिज्ञासमानाभ्यस्ताभ्योऽशप्सत कामिनः॥ ३३॥

कोपादित्यादि। काश्चित् स्त्रियः कोपात् अन्यस्त्रीगमनजनितात् आसवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः विभाषोपयम इत्यकित्त्वपक्षे रूपं उपायमः स्वीकरण इति तङ् पाणिग्रहणपूर्व्वस्य स्वीकरणस्य तत्र स्थितत्वादौपचारिकमत्र स्वीकरणं द्रष्टव्यं समुदाङ्भ्यो यमोऽग्रन्थ इति वा तङ् उदाङ्पूर्व्वस्य यमआदानार्थत्वात् अवसरप्राप्तन्तु स्वत्वदयमुदाहृतं स्यात् प्रियैः प्रत्तन्दत्तं अचउपसर्गात्तः प्रेम जिज्ञासमानाभ्यः किमस्मासु प्रेमास्ति वा न वेति कृतकोपप्रकाशेन ज्ञातुमिच्छन्तीभ्यः ज्ञासुस्मृदृशांसन इति तङ् ताभ्योऽधिक्षिप्ताः कामिनः अशप्सत न मे त्वदन्या प्रियास्तीति तदीयशरीरस्पर्शनेन शपथञ्चक्रुः शपाउपलम्भने इत्यात्मने

पदं वाचा उपलक्षनं शरीरस्पर्शनं स्लाघह्रुङित्यादिना सम्प्रदान संज्ञायां चतुर्थी तासां ज्ञापयितुमिष्यमाणत्वात्॥ २२॥

कोपादित्यादि। काश्चित् स्त्रियः कोपात् सपत्नीसङ्गजनितात् प्रियैः प्रत्तं प्रदत्तमासवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः उपयमोविवाहइति मं विवाहः स्वीकारः उपायमः स्वीकरणे इति क्रमदीश्वरस्त्रदर्शनात् यमःसूचनेवाहूदाहइति सेः कित्त्वा भावपचे मलोपाभावः अत्राप्युदाहः स्वीकारः स्वीकरणेचेति परसूत्रदर्शनात् उपयमोविवाहइत्यत्र विवाहः पाणिग्रहणमेवेति चेत् त्रिनुत्यन्तापिवेत्यादौ अयम्योत्समायमइति फलवत्क र्त्तरि उपाङ्पूर्व्वान्मं प्रत्तमिति ग्यचसवेति दान्तः कौ तादेशः अ न्यासु प्रियस्य स्नेहोऽस्ति न वेति सन्दिह्य कृतकोपेन प्रेम ज्ञातुमि च्छन्तीभ्यताभ्यः स्त्रीभ्यः कामिनोऽशपन्त न मेऽन्या प्रियास्तीति ज्ञापनार्थं शपथं चक्रुः शपथाशीर्गत्यनुकारेशपेतिं मं मिथ्यानिरा सार्थं ज्ञापनमिह शपथः वाचा शरीरस्पर्शनमिति पाणिनीयाः यस्मैदित्सेत्यादिना संप्रदानत्वं स्मृहशननुज्ञेति क्षामं॥ २३॥

प्रादिद्दचत नोनृत्यं नाशुश्रूषत गायनान्। रामं सुस्मूर्षमाणोऽसौ कपिर्व्विरहदुःखितं॥ २४ ॥

प्रादीत्यादि। असौ कपिर्लङ्कायां नोनृत्यं प्रादिद्दचत गाय नान् गायकान् गम्यकन् युच नाशुश्रूषत न श्रोतुमिष्टवान् किमि ति रामं विरहदुःखितं सुस्मूर्षमाणः स्मर्तुमिच्छन् सनन्तेभ्यः पूर्व्व वदात्मनेपदं अज्झनगमांसनीति दीर्घत्वं उदोष्ठ्यपूर्व्वस्येत्युत्वं ॥ २४॥

प्राद्दीत्यादि। असौ कपिर्लङ्कायां नृत्यं नटनं न प्राद्दिदृक्षत न
द्रष्टुमिच्छति स्म गायमान् गाः शुश्रूषत न श्रोतुमिच्छति स्म तद्गी
तश्रवणेन गायनश्रवणमुपचर्य्यते यतोऽसौ विरहेण दुःखित
रामं सुस्मूर्षमाणः स्मर्त्तुमिच्छन् सर्व्वेच स्मृदृशनत्वनुज्ञेत्यादिना
सनि मं सुर्णोणिमीत्यगुणत्वं ह्रस्वः अज्झनिगि पङ् पतोः कः षे
शुस्मृधात्वोर्घोऽज्झनिङ्गमामिति दीर्घः अरतेर्च्छदिरणाबुरि
त्युर् गायतेर्गोणनट्थकाविति यनट् ॥ २४ ॥

अनुजिज्ञासते याथ लङ्कादर्शनमिन्दुना। तमो
पहविमुक्तांशुपूर्व्वस्यां दिश्युदैयत ॥ २५ ॥

अन्वित्यादि। अथैतस्मिन्प्रस्तावे इन्दुना चन्द्रेण उदैयत उदि
तं इणो भावे लङि रूपं पूर्व्वस्यां दिशि पूर्णेनेति दर्शयति दृश्यते
यत् दर्शनं रूपं लङ्कायारूपमनुजिज्ञासतेव पूर्व्वेण प्राप्तस्यात्मने
पदस्य नानोर्ज्ञ इति प्रतिषेधः तमोपहास्तमोविध्वंसमानाः विमु
क्ताः प्रेरिताश्रंशवोयस्मिन् उदय इति ॥ २५ ॥

अन्वित्यादि। अथानन्तरमिन्दुना पूर्व्वस्यां दिशि उदैयत
उदितं इणोभावे घी पूर्व्वस्यां दिशीत्युपादानेन इन्दोः पूर्णत्वं
सूचितं कृष्णपक्षः सूचितोवा किङ्कुर्व्वता लङ्कायायद्दर्शनं रूपम
मित्यर्थात् तदनुज्ञातुमनुमन्तुमिच्छतेव चन्द्रोदये सत्येव हनू
मता लङ्का द्रष्टव्येति तच तदनुमतिरपेक्ष्यते अन्ये तु दृश्यत इति
दर्शनं रूपं लङ्कायारूपं ज्ञातुमिच्छतेवेत्याह स्मृदृशनत्वनुज्ञेत्यच

अनुवर्त्तमानाय मे तमोपहा अन्धकारविध्वंसका विमुक्ताः प्रेरिता अंशवो यस्तेयुद्धक्रियाविशेषणं यद्यपि परमते कान्तस्य पूर्व्वनिपातो दृश्यते तथापि विमुक्तशब्दस्याच न पूर्व्वनिपातोगमकत्वात् अत एव देवं सोऽन्वेषणीयमुक्तं केचित्तु सन्तोर्भावेक्तिप् तमोपहन्नाय विमुक्ता अंशवो यस्तेनाङ्कः ॥ २५ ॥

आशुश्रूषन् समैथिल्या वार्त्तां हर्म्येषु रक्षसां। शीयमानान्धकारेषु समचारीदशङ्कितः ॥ २६ ॥

आश्रित्यादि। स कपिर्मैथिल्याः सीताया वार्त्तामाशुश्रूषन् श्रोतुमिच्छन् प्रत्याङ्भ्यां श्रुव इत्यात्मनेपदप्रतिषेधः रक्षसां हर्म्येषु गृहेषु समचारीत् सञ्चारितवान् अतो लान्तस्येति वृद्धिः शीयमानान्धकारेषु अपगच्छत्तमस्सु शद्लृशातने शदेःशित इति तङ् पाघ्रेति शीयादेशः अशङ्कितः शङ्कारहितः ॥ २६ ॥

आश्रित्यादि। हनूमान् मैथिल्या वार्त्तामाश्रोतुमिच्छन् रक्षसां हर्म्येषु सौधगृहेषु समचारीत् संचरति स्म इतोआश्रोगाभावात् सभस्येति न सं प्रजवदेति निः श्रृहशननुश्रेत्यादावाङ् वर्त्तमानाय मे कीदृशेषु शीयमाना अपगच्छन्तोऽन्धकारा येभ्यः शदेऽपि समिति मे अशङ्कितः निर्भयः कर्त्तरि क्तः अकर्मकत्वात् भावे क्तोवा शङ्का जाताऽस्येति इतोऽस्य जात इति इतोवा ॥ २६ ॥

ततस्तादृक्समारम्भं मध्यगं रक्षसां कपिः। ददर्श यं कृतान्तोऽपि म्रियेतासाद्य भीषणं ॥ २७ ॥

शतेत्यादि। मध्यमं मध्यप्रकोष्ठगतं आरचं गोपकं शतसाहस्रं रचसां लचमात्रं ददर्श विलोकितवान् शतसहस्रं परिमाणमस्येति प्राग्वतेः संख्यापूर्व्वपदानां तदन्तग्रहणमलुकीति वचनात् शतमानविंशतिकेत्यादिना अणि संख्यायाः संवत्सरेत्युत्तरपदवृद्धिः भीषणं भयानकं आसाद्य प्राप्य कृतान्तोऽपि यमोऽपि म्रियेत प्राणान् मन्यजेत् म्रियतेर्लुङ्लिङोश्चेति तङ् तत्र हि शितइत्यनुवर्त्तते॥ ३७॥

शतेत्यादि। कपिर्मध्यगं मध्यकोष्ठगतं रचसामारचं ददर्श शतसाहस्रं शतसहस्रं परिमाणमस्येति विकारसंघेत्यादिना तदस्य परिमाणमित्यर्थे ष्णः सुपञ्चालादित्वादुत्तरपदे वृद्धिः यं भीषणं भयङ्करं आसाद्य प्राप्य कृतान्तोऽपि म्रियेत प्राणान् त्यजति किमुतान्यः विधिनिमन्त्रणेत्यादिना सम्भावनायां लिङ् म्लङ्ष्टीक्ष्मिति मं॥ ३८॥

अध्यासिसिषमाणेऽथ वियन्मध्यं निशाकरे। कासाञ्चक्रे पुरी सौधैरतीवोद्भासिभिः सितैः॥ ३८।

अध्येत्यादि। अथ निशाकरे चन्द्रमसि वियन्मध्ये अध्यासितुमारोढुमिच्छति सति पूर्व्ववत्सनइत्यात्मनेपदं आसेरनुदात्तेत्त्वमात्मनेपदनिमित्तं तेनैव सनन्तादपि भवति अत्र सनि इटि कृते अजादेर्द्वितीयस्येति द्विर्व्वचनं पुरी लङ्का कासाञ्चक्रे शोभते स्म सौधैः सौधानां ज्योत्स्नयातोद्भासमानत्वात् आम्प्रत्ययवदिति तङ्॥ ३८॥

अथेत्यादि। अथानन्तरं निशाकरे चन्द्रे आकाशस्य मध्य मध्यासितुमारोढुमिच्छति सति पुरी लङ्का सौधैर्गृहविशेषैः काशाञ्चक्रे शुशुभे काशृङ्कुशब्दइत्यस्यानेकार्थत्वात् दीप्त्यर्थता काशृङ्दीप्तौ दन्त्यान्तोऽस्तीति विद्यासागरः केचित्तु काशाञ्चक्रइति तालव्यशकारवान् पाठः काशृङ्द्युतावित्यस्य रूपं वदन्ति ॥ ३८॥

इन्दुञ्चषकसंक्रान्तमुपायुङ्क्त यथामृतं। प्रयुञ्जानः प्रियावाचः समाजानुरतोजनः॥ ३९ ॥

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः पानगोष्ठीरतोजनः चषकसंक्रान्तं मद्यभाजने प्रतिबिम्बेन संक्रान्तमिन्दुमुपायुङ्क्त उपभुक्तवान् प्रतिबिम्बावच्छिन्नस्य मद्यस्योपलक्ष्यमाणत्वादेवमुक्तं यथाऽमृतं अमृतमिव प्रियाअनुकूला वाचः प्रयुञ्जानः अभिदधानः प्रोपाभ्यामिति तङ्॥ ३९ ॥

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः पानगोष्ठीरतोजनश्चषकसंक्रान्तं मद्यपात्रे प्रतिबिम्बेन सङ्गतं चन्द्रमुपायुङ्क्त दर्शनादिक्रियाव्याप्यं चकार चन्द्रस्योपयोगोदर्शनादिरूपएव जयमङ्गलायान्तु चन्द्रमुपायुङ्क्त बुभुजे चन्द्रशब्देन तत्प्रतिबिम्बावच्छिन्नमद्यभागस्य लक्षितत्वात् यथामृतमिवेत्युक्तं किं कुर्व्वन् यथामृतं तद्वत् प्रियावाचः प्रयुञ्जानः पीयतामित्याद्यनुकूलवाचोऽभिदधानः युजिरउङ्गन्चइति मं मद्याकाव्योचितं मधुपानवर्णनमिदं॥ ३९ ॥

संदष्टवानिवोत्कण्ठामुपाभुङ्क्त सुरामलं। ज्योत्स्नायां विगलन्मानस्तरुणोरक्षसां गणः ॥ ४० ॥

संदष्टवानित्यादि। रक्षसां तरुणोगणः उत्कण्ठां प्रियासु संस्मरणं संदष्टवानिव समुत्तेजयन्निव समःस्त्रुवदिति तङ् ज्योत्स्नायां सुरां अलमत्यर्थौ समुपाभुङ्क्त अभ्याहृतवान् भुञ्जानवनदिति तङ् विगलन्मानः ॥ ४० ॥

संदष्टवानित्यादि। तरुणोयुवा रक्षसां गणउत्कण्ठां प्रियाभिलाषं संदष्टवानिव समुत्तेजयन्निव ज्योत्स्नायां सुरां मदिरां अलमत्यर्थं उपाभुङ्क्त भक्षितवान् सुरापानादेव विगलन्मानः अपगतमानः संदष्टेः मुजोऽसनेदिति सं उत्कण्ठोक्ताऽनवाप्तो योऽभिलाषस्तदवाप्त्यर्थेइति ॥ ४० ॥

मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके। आत्मानं सुरताभोगविस्रम्भोत्पादनं मुहुः ॥ ४१ ॥

मध्वेत्यादि। कीदृशं मधु स्वच्छत्वात् सोत्पलतया सुरभित्वात् शोभनं जातं यतः स्वयमात्मानं मुहुरपाययत पायितवत् णेरणाविति तङ् दयितान्तिके दयितस्य समीपे सुरताभोगः सुरतविमर्दः तत्र विस्रम्भः तस्योत्पादनं जनकं उत्पादयतीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् ॥ ४१ ॥

मध्वित्यादि। रक्षसां गणोदयितान्तिके रमणीसमीपे आत्मानं मधु मुहुर्व्वारं वारं अपाययत ञिन्त्यन्तपिबेति सं यद्वा

मध्वेव कर्तृभूतमात्मानं अपाययत् निसृष्टमपि रक्षोगणं सुरापानमकारयत् मधुगुणादेव पानात् अर्दैऽशौघेदति मं अशो मधुनः कर्मत्वात् मधु कीदृशं स्वच्छं निर्मलं सोत्पलं नियाकर्णोत्पलप्रतिबिम्बात् शेखरभाय प्रक्षिप्तोत्पलं वा सुरताभोगे सुरतविमर्दे विस्रम्भस्य विश्वासस्य उत्पादनं जनकं कभावेऽमोति कर्त्तरि अनट् भावेऽनटि रूपकालङ्कारो वा नन्द्यादित्वाद्वाऽनः उत्पादनक्षममिति पाठस्तु सुगमएव ॥ ४१ ॥

अभीषयन्त ये शक्रं राक्षसारणपण्डिताः। अविस्मापयमानस्तान् कपिराटीद्गृहाद्गृहं ॥ ४२ ॥

अभीत्यादि। एवं रक्षःसु यथायथं चेष्टमानेषु ये राक्षसा रणपण्डिताः संग्रामविज्ञाः शक्रमभीषयन्त भीषितवन्तः भीस्म्योर्हेतुभयइति तङ् भियोहेतुभये षुक् भयग्रहणमुपलक्षणं तेन स्मयतेरपि भवति तानसौ कपिरविस्मापयमानः विस्मयमकारयन् नित्यं स्मयतेरित्यात्वं गृहाद्गृहमाटीत् गतवान् लुङि रूपं ॥ ४२ ॥

अभीषयन्तेत्यादि। रणे पण्डिताः कुशलाये राक्षसाः शक्रं अभीषयन्त त्रासितवन्तः तान् अविस्मापयमानः विस्मितान् अकारयन् मधुपानाद्यासक्ततया तैरविज्ञातइति भावः असौ कपिर्गृहात् एकस्मात् गृहमपरमाटीत् जगाम भीर्भीषवेति औ मं भीषादेशस्य अच घाङ्गर्थइत्यनुवर्त्तते अच ध्वर्थीभयं

नन्तु राक्षसकर्त्तृत एव भिक्षुः भिक्षोर्धाङ्कर्षेमच्चेति औ इकार स्यालं मस्य भ्रटेर्ष्यां भिः ॥४२॥

सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्द्धयत राक्षसान्। अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषां ॥४३॥

सीतामित्यादि। सकपिः सीतां दिदृक्षुः सीतान्द्रष्टुमिच्छुः प्रच्छन्नः राक्षसानगर्द्धयत व्यामोहयत् स्वमायाभिश्च नरद्विषां मायाश्च अवञ्चयत अतिसंहृतवान् गृधिवञ्च्योः प्रलम्भनइति तङ्॥ ४३ ॥

सीतामित्यादि। सीतां दिदृक्षुर्द्रष्टुमिच्छुः प्रच्छन्नो गुप्तः सकपिः राक्षसान् अगर्द्धयत व्यामोहयत् स्वमायाभिर्नरद्विषां राक्षसानां मायाश्च अवञ्चयत वृथा चकार प्रतारैवञ्चिगर्द्धैरिति सं प्रतारो विसम्वादनं मिथ्याख्यानमिति केचित् ॥४३॥

अपलापयमानस्य शत्रूंस्तस्याभवन्मतिः। मिथ्या कारयते चारैर्घोषणां राक्षसाधिपः॥४४॥

अपेत्यादि। तस्य कपेः शत्रून् राक्षसान् अपलापयमानस्य न्यक्कुर्व्वतः विभाषालीयतेरित्याले लियःसंमानेत्यादिना शालिनी करणेन्यग्भावने आत्मनेपदं मतिरभवत् कीदृशीत्याह मिथ्या कारयतइति अयं राक्षसाधिपतिश्चारैर्दण्डवाहकैः यां घोषणां पुनः पुनः कारयति जागृत जागृतेति तां मिथ्या कारयते येना

हमविज्ञातएव प्रविष्टः मित्योपपदात्कृञोऽभ्यासइति तङ् अ
भ्यासस्य पुनःपुनःकरणं ॥ ४४ ॥

अपेत्यादि। शत्रून् राक्षसान् अपलापयमानस्य वञ्चयमानस्य
तस्य कपेरित्थं मतिरभवत् मिथ्योरिति लियोङ्ग पूजाभिभवे च
लाजेरिति चकारात् प्रतारे मं कीदृशी मतिरित्याह राक्षसाधि
पोरावणश्चारैर्घोषणां मिथ्या कारयते जागृत जागृतेत्युच्चैर्घुष्टं
मिथ्यैव चारैः कारयति तां कर्त्तुं चरान् पुनःपुनः प्रयुङ्क्ते निष्फल
मेव येनाहमविज्ञातएव भ्रमामि मिथ्याकारैरभ्यासइति मं
अभ्यासः पौनःपुन्यं चरएव चारः स्वार्थे ण्ः ॥ ४४ ॥

गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः। नृभ्यो
ऽपवादमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥

गूहेत्यादि। स्वमाहात्म्यं स्वपराक्रमं गूहमानः आच्छन्
ऊदुपधायागोहइत्यूत्त्वं स्वरितजितइति तङ् अटित्वा मन्त्रि
संसदः शुकसारणादिगृहाणि गत्वा रावणस्य गृहं ययौ कीदृ
शस्य नृभ्योऽपवदमानस्य कुप्यतः असूयतोवा अपाद्वदइति तङ्
नृभ्यइति क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी ॥ ४५ ॥

गूहेत्यादि। असौ स्वमाहात्म्यं स्वपराक्रमं गूहमानः संवृ
ण्वन् मन्त्रिणां संसदोगृहाणि अटित्वा गत्वा रावणस्य गृहं ययौ
कीदृशस्य नृभ्योऽपवादमानस्य असूयतः जिनन्त्यन्तपिवेत्यादिना
अपवादेमं यस्मैदित्सेत्यादिना असूयार्थे न संप्रदानत्वं गुह्नश्च

संवृतौ उभयपदी गुर्धूक्इति गुणः गुहोणोरुरित्योकारश्च
जत्वं॥४५॥

दिव्योद्योतयमानाभिर्दिव्यनारीभिराकुलं। श्रिय
मायच्छमानाभिरुत्तमाभिरनुत्तमां॥४६॥

कीदृशं गृहमित्याह। दिव्यइत्यादि द्योतयमानाभिः भासय
मानाभिः णिचश्चेति तङ् दिव्यनारीभिः उत्तमाभिः प्रधाननायि
काभिराकुलं व्याप्तं श्रियमनुत्तमामतिशयवतीं आयच्छमानाभिः
स्वीकुर्व्वाणाभिः समुदाङ्भ्यइति तङ्॥४६॥

दिव्यइत्यादि। कीदृशं गृहं यथा दिव्यनारीभिर्दिवि भवाभिः
स्त्रीभिराकुलं व्याप्तं कीदृशीभिः दिव्योद्योतयमानाभिः भासयमा
नाभिः ण्यन्तत्वादुभयपदं उत्तमाभिः श्रेष्ठाभिः अनुत्तमां अत्यु
त्कृष्टां श्रियं आयच्छमानाभिः स्वीकुर्व्वाणाभिः णिन्व्यन्तेत्यादिना
आङ्पूर्व्वयमेरात्मने न विद्यते उत्तमं यस्मादिति विग्रहः उत्तमेऽनु
त्तमं विद्यादिति द्विरूपकोषः॥४६॥

नित्यमुद्यच्छमानाभिः स्मरसम्भोगकर्म्मसु। जाना
नाभिरलं लीलाकिलकिञ्चितविभ्रमान्॥४७॥

नित्येत्यादि। स्मरसम्भोगकर्म्मसु कामोपभोगक्रियासु नित्य
मुद्यच्छमानाभिः पूर्व्ववत्तङ् लीलाः स्त्रीणां शृङ्गारचेष्टाविशेषाः

तथाचोक्तं लीलाः सलीलाः किलकिञ्चितानि विव्वोकमाप्यायित विभ्रमाणि। विच्छित्तमाकुट्टमितेचितानि योज्यानि तज्ज्ञैः सुकुमार नृत्यइति लचणञ्चैषां नृत्यशास्त्रे॥ ४७॥

नित्यमित्यादि। कीदृशीभिः सुरतसम्भोगकर्म्मसु कामोप भोगक्रियासु नित्यमुद्यच्छमानाभिः उद्यमं कुर्व्वतीभिः जिनन्त्यन्ते त्यादिना उत्पूर्व्वयमोमं लीलाकिलकिञ्चितविभ्रमान् शृङ्गार चेष्टाविशेषान् अलमत्यर्थं जानानाभिः पूर्व्ववत् अगिञ्जोमं प्रिया नुकरणे लीलावेशभाषाविचेष्टितैः क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितं विभ्रमस्त्वरया काले भूषास्थानविपर्य्ययः ईदृशी भिर्द्दिव्यनारीभिराकुलं गृहं ययाविति सम्बन्धः॥ ४७॥

स्वं कर्म्म कारयन्नास्ते निश्चिन्तोयाझषध्वजः। स्वार्थं कारयमाणाभिर्यूनोमदविमोहितान्॥ ४८॥

स्वङ्केत्यादि। स्वमात्मीयं मोहनादिकर्म्म दिव्यनारीः कार यन् अनुष्ठापयन् एषझषध्वजः कामदेवः निश्चिन्तआस्ते ताभिरा कुलमिति योज्यं हक्रोरन्यतरस्यामिति द्विकर्म्मकता यून: स्वार्थं स्वप्रयोजनं मैथुनाख्यङ्कारयमाणाभिः आकुलं तान् हनूमानिति वच्यमाणेन सम्बन्धः कीदृशान् मदविमोहितान् मधुपानमद परवशान् ताभिः॥ ४८॥

स्वमित्यादि। या दिव्यनारीः स्वं कर्म्म मोहनादि कारयन् झषध्वजः कामोनिश्चिन्तोनिराकुलः सन्नास्ते यासां कामएवास्ति

न चिन्ता तद्विरोधिनी ताभिराकुलं गृहं ययौ योऽश्नेरित्या दिना प्रयोज्यस्य कर्मत्वं मदेन विमोहितान् यूनस्तरुणान् स्वार्थं स्वप्रयोजनं कारयमाणाभिः ण्यन्तस्योभयपदित्वात् ग्रहशानौ दर्शितौ ॥ ४८ ॥

कान्तिं स्वां वहमानाभिर्यजन्तीभिः स्वविग्रहान् ।
नेत्रैरिव पिबन्तीभिः पश्यतां चित्तसंहतीः ॥ ४९ ॥

कीदृशाभिरित्याह कान्तिमित्यादि । स्वाङ्कान्तिं शोभां वहमानाभिः यजन्तीभिः स्वविग्रहान् ददतीभिः कामिभ्यः तत्र स्वङ्कर्मेति णिचश्चेत्यस्य विषयः कान्तिं स्वां स्वविग्रहानिति स्वरितेत इत्यस्य विषयः विभाषोपपदेनप्रतीयमान इति विभाषाआत्मनेपदं इत्यात्मनेपदाधिकारः शेषभूतत्वात्परस्मैपदविधानमाह नेत्रैरिति पश्यतां चित्तसंहतीः चित्तसन्दोहान् पिबन्तीभिरिव गृह्णन्तीभिरिव शेषात्कर्त्तरि परस्मैपदं ॥ ४९ ॥

कान्तिमित्यादि । स्वां कान्तिं वहमानाभिः धारयन्तीभिः वहोऽप्यपणे ञिनुभ्यन्तपि [illegible] फलवत्कर्त्तरि सं मन्मथेनार्पिता छाया सैवकान्तिरिति स्मृता । स्वविग्रहान् स्वदेहान् यजन्तीभिः कामिभ्योददतीभिः यजैर्दानार्थादानसङ्गतिकृतौ ञिनुभ्यन्तेत्यादौ ञिद्धातोः फलवत्कर्त्तर्य्यात्मनेपदस्यानित्यत्वं नित्यत्वे हि नवशःपमेदत्यनेन ञिद्धातोरुभयपदकथनमनर्थकं स्यात् फलवत्कर्त्तनियमितात्मनेपदादन्यत्र परस्मैपदस्य गम्यमानत्वात्

टीकीमिति नियमादन्यत्र किं परस्मैपदं नगम्यते तेनात्र यजेः फलवत्कर्त्तर्य्यपि परस्मैपदं फलवत्कर्त्तरि आत्मनेपदमेव अन्य त्रोभयपदमिति नवशःपमेञ्जितइत्यस्य साफल्यमिति चेत् क्वचिद पवादविषयेऽप्युत्सर्गोऽभिनिविशतइति न्यायात् नवशःपमेञ्जितइ त्यनेनोभयपदित्वं विद्यासागरस्तु फलवत्त्वाविवक्षायां पदं संज्ञा त्य पश्चात् स्वशब्दादिसम्बन्धात् वाक्ये क्रियाफलस्य कर्त्तन्वयोगम्य तइत्याह अपरे तु कर्त्त्रभिप्रायेऽपि क्रियाफले विभाषोपपदेन प्रतीयमानइति सूत्रेण पक्षे आत्मनेपदाभावमाहुः। इत्यात्मने पदाधिकारः अथ परस्मैपदमुच्यते । पश्यतां जनानां चित्तसमू हान् नेत्रैरिव पिवन्तीभिः स्त्रीभिराकुलं गृहं ययावित्यन्वयः पापाने नवशःपमे इति पं शह्नः॥ ४८ ॥

तान्हनूमान् पराकुर्व्वन्नगमत् पुष्पकं प्रति। विमानं मन्दरस्याद्रेरनुकुर्व्वद्दिवश्रियं॥ ५० ॥

तानित्यादि। तान्दिव्यनारीः पराकुर्व्वन्नपक्षिपन् अगमत्पु ष्पकम्प्रति पुष्पकविमानं प्रति येन पुष्पकविमानेन जगाम कीदृ शं मन्दरस्याद्रेः श्रियमनुकुर्व्वद्दिव अनुपराभ्यांकृञः कर्त्त्रभिप्राये चात्मनेपदस्य प्राप्तत्वात् ॥ ५० ॥

तानित्यादि। हनूमान् तान्दिव्यनारीः पराकुर्व्वन् विक्षिपन् पु ष्पकनामानं विमानं प्रति लक्षीकृत्य अगमत् कीदृशं मन्दरना म्नोऽद्रेः श्रियमनुकुर्व्वद्दिव स्वश्रिया सदृशीकुर्व्वद्दिव कृञोञित्त्वादु भयपदप्राप्ते घेपंपरेति पं तानित्यत्र तान् इति पठित्वा याम् चूनः

स्वार्थं कारयमाणाभिराकुलं गृहं ययौ तान् पराकुर्व्वन्निति तृतीयश्लोकेनान्वयोऽन्वयसङ्गतायामुक्तः व्योमयानं विमानोऽस्त्री त्यमरः ॥ ५० ॥

तस्मिन् कैलाससङ्काशं शिरःशृङ्गं भुजद्रुमं। अभिक्षिपन्तमैक्षिष्ट रावणं पर्व्वतश्रियं ॥ ५१ ॥

तस्मिन्नित्यादि। तस्मिन् विमाने रावणमैक्षिष्ट कैलाससङ्काशं कैलासतुल्यं शिरःशृङ्गं शिरांसि शृङ्गाणीव यस्य भुजद्रुमं भुजा द्रुमाइव यस्य तं पर्व्वतस्य श्रियोऽभिक्षिपन्तं अभिभवन्तं अभिप्रत्यतिभ्यःक्षिपइति परस्मैपदं तस्य स्वरितेत्त्वात् कर्त्रभिप्राय आत्मनेपदं प्राप्तं ॥ ५१ ॥

तस्मिन्नित्यादि। हनूमान् तस्मिन् विमाने रावणमैक्षिष्ट दृष्टवान् कीदृशं कैलाससङ्काशं कैलासतुल्यं तुल्यतां दर्शयति शिरांसि शृङ्गाणीव यस्य भुजाश्च द्रुमाइव यस्य तादृशं अन्येषां पर्व्वतानां श्रियं अभिक्षिपन्तं अभिभवन्तं घेपमित्यादौ प्रत्यभ्यतिक्षिपेति सं कैलासेति केलिःप्रयोजनमस्येति विकारसंघेत्यादिना ष्णे कैलः आस्यतेऽस्मिन्नित्यासः पश्चात् कर्म्मधारयः केलीनां समूहः कैलं पूर्व्ववत्ष्णः तस्यासइति वा ॥ ५१ ॥

प्रवसन्तं सदामोदं सुप्तं परिजनान्वितं। मघोने परिमृष्यन्तमारमन्तं परस्मरे ॥ ५२ ॥

प्रवत्यादि। सदामोदं कस्तूरिकादिपरिमलमवहन्तं प्राद हइति परस्मैपदं स्वरितेत्त्वात् सुप्तं शयने संविष्टं परिजनान्वितं पारिपार्श्विकाधिष्ठितं मघोने इन्द्राय परिमृष्यन्तं असूयन्तं परेर्मृषइति परस्मैपदं मृषेः स्वरितेत्त्वात् क्रुधद्रुहेति सम्प्रदान संज्ञायां चतुर्थी स्मरे कामे परमत्यर्थं आरमन्तं सक्तिं कुर्व्वाणं व्याङ्परिभ्योरमइति परस्मैपदं रमेरनुदात्तेत्त्वात्॥ ५२॥

प्रवहन्तमित्यादि। कीदृशं रावणं सन्तमुत्कृष्टं आमोदं कस्तूरिकादिपरिमलं सदा सर्व्वदा वा आमोदं प्रवहन्तं घेपमित्यादौ प्रवहेति पं सुप्तं शयानं परिजनैः पारिपार्श्विकैरन्वितं मघोने इन्द्राय परिमृष्यन्तं असूयन्तं घेपमित्यादौ परिमृषेति पं यस्मै दित्सेत्यादिना संप्रदानत्वं स्मरे कामे परमत्यर्थं आरमन्तं क्रीडन्तं घेपमित्यादौ व्यापरिरमइति पं॥ ५२॥

व्यरमत् प्रधनाद्यस्मात्परित्रस्तः सहस्रदृक्। क्षणं पर्य्यरमत्तस्य दर्शनात्पवनात्मजः॥ ५३॥

व्यरेत्यादि। यस्माद्रावणात्सहस्रदृगिन्द्रः परित्रस्तः भीत्रार्थानामित्यपादाने पञ्चमी प्रधनात् युद्धात् व्यरमत् उपरतव्यापारोऽभूत् व्याङ्परिभ्योरमइति परस्मैपदं जुगुप्साविरामप्रमादार्थानामपादाने पञ्चमी तस्य दर्शनात्मारुतात्मजः हनूमान् क्षणं पर्य्यरमत् तुष्टिमानभवदित्यर्थः साधु रावणेति पूर्व्ववत्तङः परस्मैपदं॥ ५३॥

व्यरमदित्यादि। सहस्रदृगिन्द्रो यस्मात् रावणात् परित्र स्तोभीतः सन् प्रधनात् युद्धात् व्यरमत् उपरतोऽभूत् यतोऽपा येत्यादिना भीविरामयोरपादानं पूर्ववत्यं सहस्रदृगिति पदोप न्यासेयुक्तः परित्रस्तस्य सर्व्वत्र प्रेरितनेत्रत्वात् तस्य दर्शनात् मा रुतात्मजो हनूमान् चणं पर्य्यरमत् तुष्टोऽभवत् पूर्व्ववत्यं॥ ५३॥

उपारंसीच्च संपश्यन् वानरस्तं चिकीर्षितात्। रम्यं मेरुमिवाधूतकाननं श्वसनोर्म्मिभिः॥ ५४॥

उपेत्यादि। तं रावणं पश्यन् वानरः चिकीर्षितात्कर्तुमि ष्टात् सीतान्वेषणादुपारंसीत् निवृत्तः उपाच्चेत्यधिकृत्य विभाषा कर्मकादिति लुङः परस्मैपदं तस्य मेरोरिव रम्यत्वात् यदाह मे रुमिव श्वसनोर्म्मिभिः वातसमूहैः आधूतकाननं प्रचलितवनं मेरुं तथा श्वसितकल्लोलैः आधूतानि शिरांस्याननानि च यस्येति॥५४॥

उपेत्यादि। वानरस्तं रावणं संपश्यन् चिकीर्षितात् कर्त्तुमि ष्टात् सीतान्वेषणादपि उपारंसीत् निवृत्तः येपमित्यादौ वाङ्प रमइति पचे यं यमरमेति रम्यसनौ मेरुवत् रम्यं श्वसनोर्म्मिभि र्निश्वासवेगैराधूतानि ईषत्कम्पितानि काननानि गृहाणि येन कानि शिरांसि आननानि च यस्येति वा मेरुपचे श्वसनोर्म्मिभि र्व्वायुवेगैराधूतानि काननानि वनानि यत्र उर्म्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाशयोः। काननं विपिने गेहे परमेष्ठिमुखेऽपिचेति विश्वः कं शिरोऽम्बुनोरित्यमरः॥ ५४॥

दृष्ट्वा दयितया साकं रहीभूतं दशाननं। नात्र सीतेत्युपारंस्त दुर्म्मना वायुसम्भवः॥ ५५॥

दृष्ट्वेत्यादि। रहीभूतम्बिजनस्थं दशाननं अरुर्मनश्चक्षुरित्यादिना च्वौ सलोपः दयितया साकं दृष्ट्वा नात्र सीतेति ज्ञात्वा उपारंस्त विमनानिवर्त्तते स्म विभाषाकर्म्मकादिति तङ् वायुसम्भवो हनूमान्॥ ५५॥

दृष्ट्वेत्यादि। दयितया साकं सह रहीभूतं विजनदेशस्थं दशाननं दृष्ट्वा अत्र सीता नास्तीति ज्ञात्वा दुर्म्मना दुःखितचित्तो वायुसम्भवो हनूमान् उपारंस्त निवर्त्तते स्म तस्माद्देशादित्यर्थात् पूर्ब्बवत् पक्षे मं अरहसि रहसि भवन्तमिति मनश्चक्षुरित्यादिना सलोपः॥ ५५॥

ततः प्राकारमारोहत् क्षपाटानविबोधयन्। नायोधयत्समर्थोऽपि सीतादर्शनलालसः॥ ५६॥

ततइत्यादि। ततउत्तरकालं प्राकारमारोहत् आरूढवान् क्षपाटान् राक्षसान् अविबोधयन् अचेतयन् णिचश्चेत्यात्मनेपदे प्राप्ते बुधयुधेत्यादिना वा लटः परस्मैपदं बुधेरणौ सकर्म्मकस्य चित्तवत्कर्त्तृकत्वात् हनूमतश्चित्तवत्त्वात् तत्र ह्यकर्म्मकाये तेषामचित्तवत्कर्त्तृत्वार्थमुपादानमित्युक्तं तान्नायोधयत् समर्थोऽपि न संग्रामितवान् यतः सीतादर्शनलम्पटः अणावकर्म्म

कादित्यनेन उभयचापि लङः परस्मैपदं बुधेरेकस्याचित्तव त्कर्तृकत्वात्॥ ५६॥

ततइत्यादि। ततोऽनन्तरं हनूमान् प्राकारमारोहत् आरूढ वान् किङ्कुर्व्वन् चपाटान् राचसान् अविबोधयन् अचेतयन् सम र्थोऽप्यसौ तान् नाबोधयत् यतः सीतायादर्शने लालसोमहाभिला षोऽस्य ण्यन्तादुभयपदे प्राप्ते कम्पान्नार्थेङ्गित्यादिना पं॥ ५६॥

अध्यासीद्राघवस्याहं नाशयेयं कथं शुचः। वैदेह्या जनयेयं वा कथमानन्दमुत्तमं॥ ५७॥

अध्येत्यादि। राघवस्याहं कथं केन प्रकारेण शुचं शोकं नाश येयं कथं वा वैदेह्याः सीतायाआनन्दं जनयेयमिति हनूमान ध्यासीत् चिन्तितवान् ध्यैचिन्तायामित्यस्य लुङि रूपं नशिजन्यो रकर्म्मकत्वात् अणावित्यनेन लिङः परस्मैपदं नबुधेत्यादिना जनिजृषित्यादिना जनेर्मित्संज्ञायां ह्रस्वत्वं॥ ५७॥

अध्येत्यादि। अहं राघवस्य शुचः शोकान् केन प्रकारेण नाशयेयं कथं वा वैदेह्याः सीतायाउत्तममानन्दं जनयेयं इति हनूमान् अध्यासीत् चिन्तितवान् ध्यैचिन्तायां एचोऽशित्या यम रमेति इमसनौ ण्यन्तनशजनाभ्यां कम्पान्नार्थइत्यादिना पं जने र्घटादिजनीति ह्रस्वः॥ ५७॥

दृष्ट्वा राघवकान्तान्तां द्रावयिष्यामि राचसान्। तस्याहि दर्शनात्पूर्व्वं विक्रमः कार्य्यनाशकृत्॥ ५८॥

दृष्टेत्यादि। इयमसाविति राघवस्य कान्तां दृष्ट्वा द्रावयिष्यामि राघवान् पलाययिष्यामि अत्र अणावित्यनेन नबुधेत्यादिना तस्याकर्म्मकस्य चित्तवत्कर्तृकत्वात् हि यस्मात् तस्याः सीतायादर्शनात्पूर्व्वं विक्रमः कार्य्यस्य सीतादर्शनरूपस्य नाशकृत्॥ ५८॥

दृष्टेत्यादि। तां राघवस्य कान्तां सीतां दृष्ट्वा अहं राघवान् द्रावयिष्यामि पलायनपरान् करिष्यामीति पूर्व्ववत्त्वं हि यस्मात तस्य राघवस्य कान्तायादर्शनात् पूर्व्वकालं विक्रमः कार्य्यस्य सीतादर्शनस्य नाशमभावं करिष्यति इत्थं चिन्तयन्निति वच्यमाणश्लोकेनान्वयः॥ ५८॥

चिन्तयन्नित्थमुत्तुङ्गैः प्लावयन्तीं दिवं वनैः। अशोकवनिकामारादपश्यत् स्तवकाचितां॥ ५९॥

चिन्तेत्यादि। इत्थं पूर्व्वोक्तप्रकारेण चिन्तयन्नारात्समीपे अशोकवनिकामपश्यत् उत्तुङ्गैरुच्चैर्व्वनैर्दिवमाकाशं प्लावयन्तीं व्याप्नुवानां बुधयुधेत्यादिना तिप् प्लवतेरकर्म्मकत्वान्वितवत्त्वात् स्तवकाचितां अशोकपुष्पस्तवकैः कृतां॥ ५९॥

चिन्तेत्यादि। इत्थं पूर्व्वोक्तप्रकारेण चिन्तयन् आरात् समीपे ऽशोकवनिकां अपश्यत् कीदृशीं उत्तुङ्गैरुच्चैर्व्वनैर्दिवमाकाशं प्लावयन्तीं व्याप्नुवतीं पूर्व्ववत् पं नगैरिति पाठे नगैर्वृक्षैरित्यर्थः स्तवकैः पुष्पगुच्छकैराचितां व्याप्तां॥ ५९॥

तां प्राविशत्कपिव्याघ्रस्तरूनचलयन् शनैः। अचासयन्वनेशयान् सुप्तान् शाखासु पक्षिणः ॥ ६०॥

तामित्यादि। तामशोकवनिकां कपिव्याघ्रः कपिर्व्याघ्र इव शनैर्मन्दं प्राविशत् तरूनचलयन् अकम्पयन् चलेरकर्म्मकत्वाच्चित्तवत्कर्तृकादणावित्यनेन च, लटःपरस्मैपदं ननिगरणेत्यादिना तद्धितन्न सकर्म्मकार्थं अचित्तवत्कर्तृकार्थञ्चेत्युक्तं वनशयान् पक्षिणः शाखासु सुप्तान् अचासयन् अणावित्यनेन परस्मैपदं वने शेरत इति अधिकरणे शेतेरित्यच् शयवासवासिष्वित्यादिना सप्तम्या विभाषाऽलुक् ॥ ६० ॥

तामित्यादि। कपिव्याघ्रः कपिश्रेष्ठो हनूमान् तामशोकवनिकां शनैर्मन्दं प्राविशत् किङ्कुर्व्वन् तरून् अचलयन् अकम्पयन् पूर्व्ववत् पं घटादित्वात् ह्रस्वः वनेशयान् वनचरान् शाखासु सुप्तान् पक्षिणोऽचासयन् कम्पाद्यर्थेष्वित्यादिना अजिप्राणिघाढादिति पं वनेशेते इति पचादित्वादन् अभिधानात् सप्तम्या अलुक् असमासेऽपि न क्षतिः अकालवाचिनः शयवासवासिषु इति सप्तम्या अलुगिति परः एओमुद्धा अवणमिनिआविलक्ष इति वचनात् नेद्व्यस्य लघुत्वं गुरुत्वे जिह्वाकष्टं वनशयानिति केचित् पठन्ति अकालवाचिनइत्यादि परसूत्रस्यानित्यत्वेन विभक्तिलोपात् ॥ ६० ॥

अवादायुः शनैर्यस्यां लतां नर्त्तयमानवत्। नायासयन्त संत्रस्ताऋतवोऽन्योन्यसम्पदः ॥ ६१ ॥

अवादित्यादि। यस्यामशोकवनिकायां वायुर्वातः शनैर्मन्दमवात् वाति स्म तामाटेति वक्ष्यमाणेन सम्बन्धः लतां नर्त्तयमानवत् नृत्तमिव कारयन् नृतिश्चलने वर्त्तते ततश्च निगरणेत्यादिना परस्मैपदं प्राप्तं नपादमीत्यादिना प्रतिषिद्धं ऋतवोऽन्योन्यं समदं परस्परस्य विभूतिं नायासयन्त नोपपीडयन्ति स्म सन्त्रस्ता रावणात् आङ्पूर्व्वाद्यसेः चित्तवत्कर्त्तृकत्वात् अणावित्यादिना परस्मैपदं प्राप्तं नपादमीत्यादिना प्रतिषिद्धं॥ ६१॥

अवादित्यादि। यस्यामशोकवनिकायां वायुः शाखाभङ्गभयात् शनैर्मन्दं अवात् वाति स्म तां प्राविशदिति पूर्व्वेण तामाटेति वक्ष्यमाणेन वा सम्बन्धः लतां नर्त्तयमानइव णिचश्चेत्यनेन फलवत्कर्त्तरि मं फलवत्कर्त्तृत्वाभावे तु नृतेः कम्पार्थत्वात् परस्मैपदं स्यादिति पुरुषोत्तमः यत्र रावणात् संत्रस्ताभीता ऋतवो बसन्तादयः परस्परसम्पद्भिर्न आयासयन्त न पीडयन्ति स्म अत्रि प्राणिघाढाचेति पे प्राप्ते पूर्व्ववन्मं॥ ६१॥

ज्योत्स्नामृतं शशी यस्यां वापीर्विकसितोत्पलाः।
अपाययत सम्पूर्णः सदा दशमुखाज्ञया॥ ६२॥

ज्योत्स्नेत्यादि। यस्यां रावणाज्ञया शशी सदा संपूर्णः सन् ज्योत्स्नामृतं वापीरपाययत पायितवान् निगरणार्थत्वात्तिपि प्राप्ते नपादमीत्यादिना प्रतिषिद्धे पिबश्चेति तङ्॥ ६२॥

ज्योत्स्नेत्यादि। यस्यां रावणाज्ञया सदा सम्पूर्णः शशी

ज्योत्स्नाकूपमश्मृतं वापीं दृदीर्घिकाश्रपाययत पायितवान् अन्ना र्थत्वात् णौ प्राप्ते पूर्ववत् आच्छादयाकेत्यादिना यन् अतएव विकसितानि उत्पलानि यासु तास्तथा ज्योतिरस्यास्तीति ज्योत्स्ना निपातनात् ॥ ६२ ॥

प्रादमयन्त पुष्पेषु यस्यां वन्द्यः समाहृताः। परिमोहयमाणाभीराक्षसीभिः समावृताः ॥ ६३ ॥

प्रादेत्यादि। यस्यां वन्द्यः समाहृताः समानीताः पुष्पेषु कामआदमयन्त अमितवत्यः तन्मतस्याचरणात् कीदृश्यः परिमोहयमाणाभिः व्यामोहयन्तीभिः राक्षसीभिः परिवृताः दमिपरिमुहोः अणावित्यादिना प्राप्तस्य परस्मैपदस्य नपादमीत्यादिना प्रतिषेधे णिचश्चेत्यात्मनेपदं ॥ ६३ ॥

प्रादेत्यादि। यस्यामशोकवनिकायां समाहृताआनीताएकत्र कृतावा वन्द्योहठहृताः स्त्रियः पुष्पेषु कामं प्रादमयन्त अश्रमितवत्यः अतिदुःखात् यतः परिमोहयमाणाभिर्व्यामोहयन्तीभी राक्षसीभिः समावृताः परिवृताः दमुपरिमुहोरन्ति प्राणिधाढा चेति णे प्राप्ते पूर्ववत् ॥ ६३ ॥

यस्यां वासयते सीतां केवलं स रिपुः स्मरात्। न त्वरोचयतात्मानं चतुरोबुद्धिमानपि ॥ ६४ ॥

यस्यामित्यादि। रिपुर्दशाननः स्मरात् कामाद्धेतोः केवलं निष्फलं यस्यां सीतां वासयते स्म वासितवान् न त्वरोचयत् आत्मानं नैवात्मानमुपरोचितवान् चतुरोऽपि योषिदाराधनकुशलोऽपि वृद्धिमानपि स्मरज्ञोऽपि रोचिवाशोरणावित्यादिना प्राप्तस्यापि च परस्मैपदस्य नपादमोतिप्रतिषेधे णिचश्चेति तङ्॥ ६४॥

यस्यामित्यादि। यस्यामशोकवनिकायां रिपुर्दशाननः स्मरात् कामात् केवलं सीतां वासयते स्म वसतिं कारयति स्म नतु आत्मानं तस्यै अरोचयत रोचितवान् चतुरोऽपि योषिदाराधनकुशलोऽपि बुद्धिमानपि स्मरशास्त्रज्ञानवानपि वसरुचोरणि प्राणिचाढाचेति पे प्राप्ते पूर्ववत्॥ ६४॥

मन्दायमानगमनोऽचरितायत्तदां कपिः। द्रुमैः शकशकायद्भिर्म्मारुतेनाट सर्व्वतः॥ ६५॥

मन्देत्यादि। कपिः सर्व्वतः सर्व्वत्र तामाट विजहार यत्तदोर्नित्यसम्बन्धात्तामिति गम्यते मन्दायमानगमनः मन्दीभवद्गमनः कीदृशीं हरितायन्तीं शाद्वलीभवन्तीं अप्राणिजातेश्चेत्यूङ् द्रुमैरुपलक्षितां कीदृशैः शकशकायद्भिः शकशभावैः शकीभवद्भिः केन मारुतेन अत्रामन्दं मन्दं भवति अहरिता हरिताभवन्तीति लोहितादित्वात्क्यष् अशका: शकाभवन्तीति वाक्ये अव्यक्तानुकरणादिति डाच् तस्मिन्विषयभूते क्यषिवञ्जले भवतः

नित्यमाम्रेडिते डाचीति पररूपत्वं डाजन्तात् शकशकाशब्दा त्क्यष् वाक्यषृदति परस्मैपदं आत्मनेपदञ्च॥ ६५॥

मन्देत्यादि। कपिः सर्व्वतः सर्व्वत्र तामशोकवनिकामाट वभ्राम कीदृशः मन्दायमानगमनः अमन्दं मन्दं भवति मन्दा यमानं तादृशं गमनमस्येति विग्रहः भृशादेरच्व्यर्थे इति क्यः ङित्त्वान्मं तां कीदृशीं हरितायन्तः हरिदर्णीभवद्भिः अहरि ताहरिताभवन्ति हरितायन्तस्तादृशास्तरवोयत्र डाज्लोहितादे रिति च्व्यर्थे क्यः पचे पञ्च मारुतेन वायुना शकशकायद्भिः शक च्छकदिति शब्दं कुर्व्वद्भिः द्रुमैरुपलचितां द्रुमैः करणभूतैराटेति वा शकदित्यनुकरणशब्दात् नैकाचोऽव्यक्तानुकरणादिति डाच् दिलञ्च तलोपोऽतदृति प्रकृतेरीञ्च तलोपः अशकशकाः शकशका भवन्तीति डाज्लोहितादेरिति च्व्यर्थे क्यः पचे पञ्च शकदित्यस्य शब्दवाचकस्यापि लचणया तद्दति वृचे वृत्तिः॥ ६५॥

अस्यन्दन्निन्दुमणयोव्यरुचन् कुमुदाकराः। अलो ठिषत वातेन प्रकीर्णास्तवकोच्चयाः॥ ६६॥

अस्येत्यादि। चन्द्रोदयादिन्दुमणयः अस्यन्दन् स्यन्दन्ते स्म तामाटेति योज्यं व्यरुचन् कुमुदाकराः विराजितवन्तः स्तवको च्चयाः गुच्छराशयः वातेन प्रकीर्णाः इतस्ततोविचिप्ताः सन्तः अलोठिषत लुठन्तेस्म सर्व्वत्र द्युद्भोलुङीति विभाषा परस्मैपदं द्युतादयश्च क्रृपूपर्य्यन्ताः॥ ६६॥

असीत्यादि। इन्दुमणयश्चन्द्रकान्ता असुस्यन्दन् स्रवन्ति स्म चन्द्ररश्मिभिरित्यर्थात् यस्यां तामाटेति सम्बन्धो बोध्यः यस्यां कुमुदानामाकरा उत्पत्तिस्थानानि व्यद्युतन् विरेजुः यस्यां स्तवकोच्चयाः पुष्पगुच्छसमूहा वातेन प्रकीर्णा इतस्ततो विक्षिप्ताः सन्तः अलोठिषत लुलुठुः स्यन्दूङ्श्रुतौ रुचूङ्प्रीतिप्रकाशयोः रुलुठङ्गत्यादिवत् एषां ङित्त्वादात्मनेपदे सिद्धे शासुद्धिद्युत्पुषादेरिति द्युतादित्वात् टौ पैङविधानं तेनैव पं अतएव द्युतादेश्चामुभयपदित्वं गम्यते परे तु लुङि द्युतादेरिति सूत्रेण विकल्पेनात्मनेपदमाहुः ङे स्यन्देर्नलोपाभावो वाङ्क्यात् देवीदासचक्रवर्त्ती तु शासुद्धिद्युदित्यादौ स्युपुनैवेष्टसिद्धौ स्युपूपादानेन ङे क्वचित् नलोपाभावो ज्ञापित इत्याह केचित्तु क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वं स्यादिति ज्ञापनाय घ्यां रूपं दर्शितमित्याहुः अलोठिषतेति माल्लोऽदनत इत्यतादेशः ॥ ६६ ॥

सीतान्तिके विवृत्सन्तं वर्त्स्यत्सिद्धिं प्लवङ्गमं। पतत्रिणः शुभामन्द्रमानुवानास्त्वजिह्लदन्॥ ६७॥

सीतेत्यादि। सीतासमीपे विवृत्सन्तं वर्त्तितुमिच्छन्तं प्लवङ्गमं वर्त्स्यत्सिद्धिं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनलक्षणा यस्य वृद्भ्यः स्यसनोरिति विभाषा तिप् तं पक्षिणः शुभाः प्रशस्ता अजिह्लदन् सुखयन्ति स्म णिचि लुङि चङि रूपं कीदृशाः मन्द्रं गम्भीरं

मधुरमानुवानाः शब्दायमानाः आङिनुप्रच्छोरुपसंख्यानमिति तङ् शुक्ताविथ्याद्यादिकस्य परस्मैपदित्वात् ॥ ६७ ॥

सीतेत्यादि। प्लुभा अनुकूलाः पतत्रिणः पक्षिणः प्लवङ्गमं हनूमन्तं अजिह्लदन् आनन्दयामासुः ह्लादीङमोदने णौ चङ्। किं कुर्व्वन्तः मन्द्रं गभीरं आनुवानाः उत्कण्ठापूर्व्वकं शब्दं कुर्व्वाणाः आङ्पूर्व्वो णुरित्युत्कण्ठायां शब्दे वर्त्तते विपराजी त्यादिना मं कीदृशं सीतासमीपे वित्वन्तं वर्त्तितुमिच्छन्तं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनरूपा यस्य तं प्लुभशब्देन भाविनीं सिद्धिमनुमाय कपेरानन्द इति ध्वनिः वृद्भ्योनेमृपेच्छच नोर्व्वालमेदिति इम्निषेधः अतएव पं तेन वृतादेःस्यसनोरु भयपदित्वं गम्यते ॥ ६७ ॥

वर्त्तिष्यमाणमात्मानं सीता पत्युरिवान्तिके। उद पश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः ॥ ६८ ॥

वर्त्तीत्यादि। सीतापि यदा तस्मिन् काले पत्यूरामस्यान्तिके आत्मानं वर्त्तिष्यमाणमिव उदपश्यत् उत्प्रेचते स्म वृद्भ्यःस्यसनो रिति विभाषावचनात्तङ् निमित्तैश्चक्षुःस्पन्दनादिभिः तथ्यैरवि सम्वादिभिः इष्टदर्शनैः इष्टार्थप्रकाशकैः दर्शनमिति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् ॥ ६८ ॥

वर्त्तीत्यादि। तदा तस्मिन् काले सीतापि पत्यूरामस्या न्तिके वर्त्तिष्यमाणमिवात्मानं निमित्तैश्चक्षुःस्पन्दनादिभिरुद

पश्यत उत्प्रेक्षितवती तस्यैरविषम्यादिभिः दृष्टः प्रियो दृश्यते यैः करणेऽनट् दृष्टं दर्शयन्तीति कर्त्तरि वा दृष्टस्य दर्शनं येभ्यइति वा ष्टतादेः पे स्यसनोरिम्निषेधः से तु दम् भवत्येव इवार्थोऽत्र साहश्यं सम्भावना वा ॥ ९८ ॥

निरवर्त्स्यन्न चेद्वार्त्ता सीतायावितथैव नः। अक ल्प्स्यदुद्यतिः सर्व्वा हनूमानित्यचिन्तयत् ॥ ९९ ॥

आत्मनेपदाधिकारः ॥

निरेत्यादि। चेदिति यद्यर्थे यदि सीतायावार्त्ता न निरव र्त्स्यत् निर्वृतिं नायास्यत् तदा वृथैव निष्फलैव नोऽस्माकमुद्यतिः सर्व्वा अयमुद्यमः समुद्रलङ्घनादिकः अकल्प्स्यत् अभविष्यत् इत्ये वं हनूमानचिन्तयत् क्रियातिपत्तौ लृङ् तत्र निरवर्त्स्यदिति वृद्भ्यःस्यसनोरिति विभाषापरस्मैपदं अकल्प्स्यदिति लुटि चक्लृ पइति चकारात् स्यसनोरपि भवति विभाषापरस्मैपदं उद्यति रिति यमेः स्त्रियां क्तिन् अनुदात्तेत्यादिना अनुनासिकलोपइ त्यात्मनेपदपरस्मैपदाधिकारः ॥ ९९ ॥

निरेत्यादि। चेद्यदि सीतायावार्त्ता न निरवर्त्स्यत् न निष्प त्स्यते तदास्माकं सर्व्वा समुद्रलङ्घनादिरूपा उद्यतिरुद्यमो वित थैव निष्फलैव अकल्प्स्यत् अभविष्यतइति हनूमान् अचिन्तयत् वृतादेः पूर्व्ववदुभयपदं अनिम् च स्यां रूपं निष्पूर्व्वो वृतिर्निष्पत्त्य

र्थः ज्ञपूपकृदृषकत्तने ज्ञपकुपोऽज्ञपादाविति कुपादेशः यमेःकात्र यनतनायनिमामिति मत्तोपः । इतिपरस्मैपराधिकारः ॥ ६९ ॥

वृक्षाद्वृक्षं परिक्रामन्रावणाद्बिभ्यतीं भृशं । अत्रो स्त्राणमपश्यन्तीमदृश्यो जनकात्मजां ॥ ७० ॥

इतः प्रभृतिकारकमधिकृत्याह । वृक्षादित्यादि । तां जनकात्मजां सीतां सकपिकुञ्जरोऽपश्यदिति वक्ष्यमाणेन सम्बन्धः वृक्षात् वृक्षं परिक्रामन् गच्छन् भ्रुवमपायेऽपादानमित्यपादानसंज्ञायां पञ्चमी रावणाद्बिभ्यतीं भृशं वर्त्तमानां अत्यर्थं अत्रोरावणाद्त्राण पश्यन्तीं यतोभयन्ततः कुतोरक्षेति भीत्रार्थानामित्यपादान संज्ञा अदृश्यः प्रच्छन्नोभूत्वा वदुपधेत्यादिना क्यप् ॥ ७० ॥

अथ कारकाधिकारः । वृक्षादित्यादि तां जनकात्मजां कपिकुञ्जरोऽपश्यदिति तृतीयश्लोकेनान्वयः किं कुर्व्वन् अदृश्योभूत्वा वृक्षादेकस्मादपरं वृक्षं परिक्रामन् गच्छन् तां कीदृशीं रावणाद्बिभ्यतीं वर्त्तमानां अत्रोरावणात् त्राणं रक्षणं अपश्यन्तीं यतोऽपायेत्यादिना सर्व्वत्रापादानत्वं अपायः संश्लेषः अपाययोगे यच्छब्दोऽवधिवचनः यतोभिर्भयमित्यत्र यच्छब्दोभयहेतुवचनः तेन भयार्थयोगे भयहेतोरपादानत्वं त्राणं रक्षणं तच भीतस्य तेनाचापि यच्छब्दोभयहेतुवचनः तेन त्राणार्थयोगेऽपि भयहेतोरपादानत्वं दृभृजुषेत्यादिना वदुक्तात् दृशेः क्यप् ॥ ७० ॥

तां पराजयमानां सप्रीतेरक्षां दशाननात्।
अन्तर्दधानां रक्षोभ्यो मलिनां ध्वांममूर्द्धजां॥ ७१॥

तामित्यादि। प्रीतेः रावणसम्बन्धिन्याः पराजयमानां विमुखीभवन्तीं पराजेरसोढ इत्यपादानत्वं असोढोऽर्थः प्रीतिः रक्ष्यां दशाननात् रावणविषये स्वयं निवार्य्यप्रसरां वारणार्थानामीप्सित इत्यपादानत्वं प्रवृत्तिविघातलक्षणया रक्षणक्रियया आत्मसम्बन्धिन्या दशाननस्य व्याप्तुमभिप्रेतत्वात् अन्तर्दधानां रक्षोभ्यः मा मां रक्षांसि द्राक्षुरिति ततस्तासामदर्शनमिच्छन्तीं येनादर्शनमित्यपादानसंज्ञा अन्तर्द्धिनिमित्तं हि रक्षोभिरात्मनोदर्शनस्यानीप्सितत्वात् मलिनां शरीरेण स्नानमूर्द्धजां मलिनकेशां बद्धवेणीत्वात्॥ ७१॥

तामित्यादि। तां कीदृशीं प्रीतेरावणसम्बन्धिन्या इत्यर्थात् पराजयमानां प्रीतिमसहमानामित्यर्थः यतोऽपायेत्यादौ पराजयोऽसहनं पराजयपदनिर्देशेन परापूर्व्वजेरसहनविषयीभूतोगम्यते पराजेरसोढे इति पाणिनिसूत्रदर्शनात् पराजेः सोढुमशक्यमिति क्रमदीश्वरसूत्रदर्शनाच्च अशक्त्या निवर्त्तनं वा पराजयः रावणप्रीतेः सकाशात् अशक्त्या निवर्त्तमानामित्यर्थः यद्यपि प्रीतिं बुद्ध्या प्राप्य ततोनिवर्त्तत इति बुद्धिकृतापायएवापादानत्वं घटते तथापि पराजयेति कृतं प्रपञ्चार्थं दशाननात् रक्ष्यां रक्षणीयां वारणार्थेऽपादानत्वं रक्ष्यां निवारणीयां वा तदा वारणार्थेऽपादानत्वं रक्षोभ्योऽन्तर्द्धानां रात्रसकर्त्तृक

र्शनाभावेच्छया व्यवहितोभवन्तीं अन्तर्द्धावपादानत्वं अन्तर्द्धिर्व्य वधानं तत्र यदीयदर्शनाभावेच्छया तस्यापादानत्वं रक्षांसि विलोक्येति वा यवर्थे पञ्चमी मलिनां शरीरेण श्याममूर्द्धजां म लिनकेशां वेणीबन्धात् मन्नशब्दात् फलादित्वात् गोत्रचमेधे त्यादिना इनः॥ ७१॥

रामादधीतसन्देशो वायोर्जातश्च्युतस्मितां प्रभ वन्तीमिवादित्याददर्शत्कपिकुञ्जरः॥ ७२॥

रामादित्यादि। सत्कृत्य अधीतसन्देशो गृहीतसन्देशः कपिकु ञ्जरः आख्यातोपयोगइत्यपादानसंज्ञा रामस्याख्यातृत्वात् सावधानतया सन्देशग्रहणात् नियमपूर्व्वकविद्यावत्सन्देशग्रहणं वायो र्जातइति जनिकर्त्तुरित्यपादानसंज्ञा जन्यर्थस्य जन्मनः कर्त्ता हनूमान् तस्य वायुः प्रकृतिः कारणं च्युतस्मितं शोकाक्रान्तत्वात् प्रभवन्तीमिवादित्यात् भुवःप्रभवइत्यनेन भवत्यर्थस्य सीतायाः कर्तृभूतायाः प्रथमतउपलभ्यमानत्वात् अतः प्रभवआदित्यः तस्यास्तेजस्वित्वात्॥ ७२॥

रामादित्यादि। च्युतं स्मितं यस्याः शोकाक्रान्तत्वात् तां आदित्यात् प्रभवन्तीमिव उत्पन्नामिव प्रथमतउपलभ्यमानां वा एतेन तेजोऽतिशयोदर्शितः यतोऽपायेत्यादिना यतोभूरित्यपा दानत्वं भूरुत्पत्तिः उत्पत्तितुल्यलक्षणया प्रथमोपलम्भस्यान स्य बुद्धिसंश्लेषपूर्व्वकस्यापायस्य सत्त्वात् यतोऽपायइत्यपादानत्वं

वा यत्र प्रकाशनं प्रभवइत्याधारस्यापादानत्वमिति श्रीपतिः भुव आदौपलम्भस्थानमित्यपादानसंज्ञार्थं जमदीश्वरस्तु च ईदृशीं तां कपिकुञ्जरः कपिश्रेष्ठो हनूमान् अपश्यदित्यन्वयः संकीदृशः रामादधीतसन्देशः गृहीतवाचिकः यतआदानमित्यपादानत्वं वायोर्जातः यतोभूरित्यपादानत्वं ॥ ७२ ॥

रोचमानः कुदृष्टिभ्योरक्षोभ्यः प्रत्तवान् श्रियं।
श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः ॥ ७३ ॥

रोचेत्यादि। तत्र तस्यामशोकवनिकायां राक्षसाधिपो रावणः आगात् आगतः रोचमानः कुदृष्टिभ्यः त्यक्तत्रयीधर्मत्वात् ये कुदृष्टयः कुबुद्धयः तान् स्वविषये स्पृहावतः कारयन्नित्यर्थः रुच्यर्थानां प्रीयमाणइति सम्प्रदानसंज्ञायां चतुर्थी रुचेरभिलाषस्य तत्रावस्थानात् कुदृष्टयः प्रीयमाणाः रक्षोभ्यः श्रियं विभूतिं प्रत्तवान् कर्म्मणा यमभिप्रैतीति सम्प्रदानं ददातिक्रियया राक्षसानामभिप्रीयमाणत्वात् श्लाघमानः परस्त्रीभ्यः युष्मदिषयेऽस्माकं स्पृहेति परकलत्राणि ज्ञापयितुमेषयन् श्लाघह्नुङ्स्थात्यादिना सम्प्रदानत्वं श्लाघया वक्ष्यमाणेन ज्ञापयितुमिष्यमाणत्वात्तासां ॥ ७३ ॥

कुलकं। रोचेत्यादि। तत्र तस्यामशोकवनिकायां राक्षसाधिपो रावणो आगात् आगतः कीदृशः कुदृष्टिभ्यो रोचमानः ये कुदृष्टयः कुबुद्धयः त्यक्तधर्म्मत्वात् तेभ्यो रोचमानस्तेषां प्रीतिमुत्पादयन्

यस्मैदित्सेत्यादिना यस्मैदत्सिरिति संप्रदानत्वं रुचिरभिलाषीत्या दनं तेन रुच्यर्थस्य कर्त्ता यस्य प्रीतिमुत्पादयति तस्य संप्रदानत्वमिति पूर्व्ववदितोऽर्थः रक्षोभ्यः प्रियं प्रसवान् इतसम्पत्ति दानः ग्यघसवेति दानसादेशः यस्मैदित्सेति संप्रदानत्वं पर स्त्रीभ्यः श्लाघमानः तासां श्लाघयन् तालोपयन् स्वकीयश्लाघां ता ज्ञापयन् वा तास्वात्मश्लाघां कथयन् वा यस्मैश्लाघार्थइति सम्प्रदानत्वं यस्मैश्लाघार्थइति श्लाघार्थेन योप्सीप्यमानस्तस्य सम्प्रदानत्वमित्यर्थः ॥ ७३ ॥

अशप्त निह्नुवानोऽसौ सीतायै स्मरमोहितः । धारयन्निव चैतस्यै वसूनि प्रत्यपद्यत ॥ ७४ ॥

अशेत्यादि । सीतायै निह्नुवानः क्रोध्यादिकं न मेऽस्तीति सीतां ज्ञापयितुमैपयन्नित्यर्थः तस्यै सीतायै अशप्यत् शपथं सीतां ज्ञापयितुमैषदित्यर्थः किमित्येवमाह स्मरमोहितः अत्र शपथा पह्नुतिक्रियया सीतामाज्ञापयितुमिष्यमाणत्वात् पूर्व्ववत्सम्प्रदान संज्ञा किञ्चास्यै सीतायै स्वामिनीभूतायै वसूनि द्रव्याणि प्रत्यप द्यत अङ्गीकृतवान् धारयन्निव गृहीतविस्तइव अत्र धारेरुत्त मर्णइति सीतायाः कयाचिदुत्तमर्णया तुल्यत्वात् ॥ ७४ ॥

अशप्तेत्यादि । असौ रावणः स्मरेण मोहितः सन् सीतायै अशप्त शपथं मिथ्यानिरसनं तां ज्ञापयितुमिच्छति स स्वशपथ पूर्व्वकं वा किञ्चित् ज्ञापयितुमिष्टवान् शपथाशीर्गत्यनुकारइति

अपथे मं तस्मै निह्नुवानः कपटापह्नवेन सीतां स्वाभिप्रायं ज्ञाप
यितुमिच्छन् किञ्च एतस्यै सीतायै वसूनि धारयन्निव मत्सम्बन्धी
नि धनानि आत्मनि स्थापयन्निव गृहीतवित्तोऽधमर्ण इव तस्यै
वसूनि प्रत्यपद्यत दातुमङ्गीकृतवान् यस्मैदित्सेत्यादिना सर्व्वत्र
सम्प्रदानत्वं अपह्नुधात्वर्थयोगे यच्छब्दो ज्ञीप्स्यमानवचनः धार्य्य
र्थयोगे यच्छब्द उत्तमर्णवचनः ॥ ७४ ॥

तस्यै स्पृहयमाणोऽसौ बहुप्रियमभाषत। सानुनी
तिश्च सीतायै नाक्रुध्यन्नाप्यसूयत ॥ ७५ ॥

तस्य इत्यादि। असौ राक्षसाधिपः स्पृहयमाणः सीतामाप्तुमि
च्छन् बहु प्रियमभाषत वक्ष्यमाणं स्पृहेरीप्सितइति स्पृहयतेः
स्वार्थिकण्यन्तस्य प्रयोगे सीताया ईप्स्यमानत्वात् सानुनीतिश्च सानु
नयः सीतायै नाक्रुध्यत् तां प्रति कोपं न कृतवान् नाप्यसूयत
दोषाविष्करणलक्षणामसूयां न कृतवान् क्रुध्यतिसूयत्योर्हिंवादि
कयोरुदात्तेत्त्वात् तौ लङि प्रयोगे क्रुधद्रुहेत्यादिना सम्प्रदानं
॥ ७५ ॥

तस्य इत्यादि। असौ रावणो बहुप्रियं वक्ष्यमाणं अभाषत
तस्यै सीतायै स्पृहयमाणः स्पृहां कुर्व्वन् यस्मैदित्सेत्यादिना सम्प्र
दानत्वं स्पृह्यर्थे यच्छब्द ईप्सितवचनः सानुनीतिः सानुनयः सन्
सीतायै मा कुध्यत् न कोपं कृतवान् नापि असूयत दोषाविष्क
रणं नापि कृतवान् असूयोङ्स्तावित्यस्यानेकार्थत्वात् इदं रूपं

र्थां कल्पादावस्य धातोर्वीटीयोऽयमित्यस्य कश्चिदभिचारादमो ऽभावइति केचित् मायस्यतेति केचित् पठन्ति पूर्ववत् सम्प्र नत्वं ॥ ७५ ॥

संक्रुध्यसि मृषा किन्त्वं दिदृक्षुं मां मृगेक्षणे । ईक्षि तव्यं परस्त्रीभ्यः स्वधर्म्मो रक्षसामयं ॥ ७६ ॥

संक्रित्यादि । किं त्वं शुभाशुभे दिदृक्षुं द्रष्टुमिच्छुं मां हे मृगे क्षणे संक्रुध्यसि क्रुधद्रुहोरुपसृष्टयोःकर्म्मेति कर्म्मसंज्ञा क्रुधेरुपस र्गेण युक्तत्वात् कुतस्ते परिज्ञानं यत्परस्त्रीषु शुभाशुभं निरूप यसि अन्यत्र दुष्टाशयत्वात् अथ कथं मृषा संक्रुध्यामीति चेदा ह ईक्षितव्यं परस्त्रीभ्यः का शुभा न शुभेति यदीक्षितव्यमी क्षणीयं तदयं स्वधर्म्मो रक्षसां राधीक्ष्योर्यस्यविप्रश्नइति सम्प्रदा नसंज्ञा यतः स्त्रीविषये विविधस्य प्रश्नस्य क्रियमाणत्वात् ॥ ७६ ॥

संक्रित्यादि । किं प्रियमभाषतेत्याह हे मृगेक्षणे त्वं शुभा न वेति द्रष्टुमिच्छन्तं मां किं मृषा त्वं संक्रुध्यसि क्रुधद्रुहोरुपसर्गे सम्प्र दानस्य कर्म्मत्वमिति केचित् स्वमते स्वभावादिमौ सोपसर्गौ सक र्म्मकाविति दुर्गवाक्यमादृतं क्रियाव्याप्यस्य कर्म्मत्वात् परस्त्रीदर्शने युक्तएव क्रोधः कथं मृषेति चेदाह परस्त्रीभ्यईक्षितव्यं विविध प्रश्नपूर्व्वकं तद्दर्शनं तासां शुभाशुभनिरूपणं वा कर्त्तव्यमित्ययं रक्षसां स्वधर्म्मः यस्येक्षितेत्यादिना ईक्षार्थयोगे सम्प्रदानत्वं

ईश्वरञ्च विविधप्रश्नपूर्व्वकदर्शनार्थः शुभाशुभपर्य्यालोचनार्था [illegible] ॥ ७६ ॥

शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु नोत्तमाः
गृणद्भ्योऽनुगृणन्त्यन्ये कृतार्था नैव मद्विधाः ॥ ७७ ॥

शृण्वदित्यादि। अनेनात्मना प्रभावं दर्शयति शृण्वद्भ्यः प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामिति मध्यमाः प्रभवः प्रतिशृण्वन्ति ओमित्युपगच्छन्ति हे भीरु नोत्तमामादृशाः ते हि स्वातन्त्र्यात्स्वयमेव हितमतिपद्यन्त इति भावः प्रत्याङ्भ्यां श्रुवः पूर्व्वस्य कर्त्तेति सम्प्रदानसंज्ञा पूर्व्वस्याः प्रार्थनक्रियायाः प्रार्थयितुः कर्त्तृत्वात् अन्ये प्रभवोऽकृतार्थाः अलब्धलाभाः गृणद्भ्यः अनुपाश्रयस्य भृत्यस्य कस्यचित्त स्तुतिं कुर्व्वद्भ्योमन्त्रिभ्यः अनुगृणन्ति तान् प्रोत्साहयन्ति अनुगृणीत अनुगृणीतेति ममानुगतोभवतीति नैव मद्विधा अनुगृणन्ति कृतार्थत्वात् गृशब्द इत्यस्य प्रयोगे अनुप्रतिगृणश्चेति सम्प्रदानसंज्ञा गृणातेः स्तुतिक्रियापेक्षया कर्त्तृत्वात् ॥ ७७ ॥

शृण्वदित्यादि। इदानीमात्मोत्कर्षः कथ्यते हे भीरु शृण्वद्भ्यः प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामित्युपदेष्टृभ्योमध्यमा एव प्रभवः प्रतिशृण्वन्ति तैः प्रयुक्ताः सन्तस्तथा कर्त्तव्यमित्युपगच्छन्ति न तु मद्विधा मादृशा उत्तमाः ते हि स्वातन्त्र्यात्स्वयमेव हिताहितं जानन्तीति भावः अन्ये तु अकृतार्थाः प्रभवो गृणद्भ्यः

स्तुतिं कुर्व्वन्त एव अनुगृह्णन्ति तैः प्रयुक्ता धनादिकं दातुमभ्युपगच्छन्ति स्वप्रसिद्धये स्तावकेभ्यो यच्छन्तीत्यर्थः नन्वेवं महिमा स्वतः प्रसिद्धत्वेन परस्तुत्यनपेक्षत्वात् यस्मैदित्सेत्यादिना उभयत्र सम्प्रदानत्वं अत्र आप्रतिश्रुप्रत्यनुपूर्व्वयोगे यच्छब्दोगस्य पूर्व्वक्रियाकर्तृवचनइति तु रामं वदन्तं प्रोत्साहयामासेत्यर्थइत्यनेन सूचितं अत्र हि प्रार्थनमेव पूर्व्वक्रिया गम्या तस्याः कर्त्ता प्रष्टच्छब्दः एवं स्तुतिकरणमेव पूर्व्वक्रिया गम्या तस्याः कर्त्ता गृणच्छब्दः॥७७॥

इच्छ स्नेहेन दीव्यन्ती विषयान् भुवनेश्वरं। सम्भोगाय परिक्रीतः कर्त्तास्मि तव नाप्रियं॥७८॥

इच्छेत्यादि। ईदृशं पूजितं भुवनेश्वरं त्रिलोकविजयिनमिच्छ अङ्गीकुरु आत्मानमुद्दिश्य स्नेहेन प्रेम्णा साधकतमं करणमिति करणसंज्ञा दीव्यन्ती क्रीडन्ती विषयान् शब्दादिभिरित्यर्थः दिवः कर्म्म चेति करणसंज्ञापवादात् कर्म्मसंज्ञा सम्भोगाय परिक्रीतः त्वद्विषयभोगेन परिक्रीतइत्यर्थः परिक्रयणे सम्प्रदानमिति सम्प्रदानत्वं तव नाप्रियं कर्त्तास्मि न करिष्यामि॥७८॥

इच्छेत्यादि॥ ॥ भुवनानामीश्वरं मां त्वं स्नेहेन प्रेम्णा इच्छ अङ्गीकुरु साधनहेतुत्विति करणत्वं किं कुर्व्वती विषयान् दीव्यन्ती विषयैः स्रक्चन्दनादिभिः क्रीडन्ती दिवोऽधेवेति पक्षे करणे द्वितीया सम्भोगाय सम्भोगेन परिक्रीतः नियतकालं त्वया सेवार्थे

सीकृतोऽहं तवाप्रियं अहं न कर्त्तास्मि न करिष्यामि परिशिष्टेषोधे, वेति पचे करणे चतुर्थी ॥ ७८ ॥

आस्स्व साकं मया सौधे मा धिष्ठा निर्ज्जनं वनं।
मा धिवात्सीर्भुवं शय्यामधिशेष्व स्मरोत्सुका ॥ ७९ ॥

आस्स्वेत्यादि। मया साकं सार्द्धं सौधे धवलगृहे आस्स्व तिष्ठ आसेर्लोटि रूपं आधारोऽधिकरणमित्यधिकरणसंज्ञायां सप्तमी मा धिष्ठा निर्ज्जनं वनं अधिशीङ्स्थासांकर्मेत्यधिकरणे कर्मसंज्ञा लुङि रूपं मा धिवात्सीः भुवं भूमौ मा शयिष्ठाः माङि लुङि रूपं उपान्वध्याङ्वसइति अधिकरणे कर्मसंज्ञा किन्तु शय्यामधिशेष्व शीङोलोटि रूपं अधिशीङिति कर्मसंज्ञा स्मरोत्सुका कामार्थिनी ॥ ७९ ॥

आस्स्वेत्यादि। मया साकं सह सौधे धवलगृहे आस्स्व तिष्ठ जि-ज्ञासइउपवेशे आमन्त्रणे प्रार्थने वा लो कालभावाधारमित्याश्रेषाधारत्वं निर्ज्जनं वनं त्वं मा धिष्ठाः निर्ज्जने वने न तिष्ठ कर्म्म क्रियेत्यादिना अधिपूर्व्वस्य आधारस्य कर्मत्वं भूस्थेति सेर्लुक् गोकः स्तुस्तुभेत्यादिना षत्वं भुवं मा धिवात्सीः भूमौ मा शयिष्ठाः पूर्व्ववदधिवसेराधारस्य कर्म्मत्वं मत्सरइति तः स्मरोत्सुका कामासक्ता सती त्वं शय्यां अधिशेष्व पूर्व्ववदधिशीङआधारस्य कर्म्मत्वं ॥ ७९ ॥

अभिन्यविक्षथास्त्वं मे यथैवाव्याहता मनः। तथाप्यध्यावसन्तं मां मारौत्सीर्हृदयं तथा॥ ८०॥

अभीत्यादि। यथैव त्वमव्याहता अनिवारिता सती मे मम मनः अभिन्यविक्षथाः अभिनिविष्टासि लुङि रूपं नेर्विश इति तङ् अभिनिविशस्तेत्यधिकरणे मनसः कर्मसंज्ञा तथा त्वमपि तद्धृदयमध्यावसन्तं मां मा रौत्सीः मा निवारय रुधेर्लुङि रूपं उपान्वध्येति हृदयस्य कर्मसंज्ञा॥ ८०॥

अभीत्यादि॥ यथैव येनैव प्रकारेण त्वमव्याहता मया अनिवारिता सती मम मनोऽभिन्यविक्षथाः अभिनिविष्टासि ग्री विश्प्रवेशे विपराजीति मं श्नमोऽनिमिजुङ इति सक् अभिन्यविक्षथाईति पाठे घी पूर्व्ववदाधारस्य कर्म्मत्वं तथा तेनैव प्रकारेण तव हृदयमध्यावसन्तं मां त्वमपि मा रौत्सीः न निवारय मां हृदिकुर्व्विति भावः रुधिरौजिधञ् आवृतौ टी पूर्व्ववदधिवसे राधारस्य कर्म्मत्वं॥ ८०॥

मावमंस्थानमस्यन्तमकार्य्यज्ञे जगत्पतिं। संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का॥ ८१॥

मावेत्यादि। हे अकार्य्यज्ञे अविशेषज्ञे मां जगत्पतिं नमस्यन्तं मावमंस्थाः लुङि रूपं कर्त्तुरीप्सिततममिति कर्म्मसंज्ञा अवमान क्रिया कर्तृसम्बन्धिन्या जगत्पतेराप्तुमिष्टत्वात् सन्दृष्टे मयि

काकुत्स्थमधन्यं मन्दभाग्यं का कामयेत का इच्छेत् नैवेत्यर्थः तथा युक्तं चानीप्सितमिति कर्मसंज्ञा येनैव प्रकारेण कर्त्तुरीप्सिततमं क्रियया युक्तं तेनैवेप्सितादन्यस्य रामस्य प्रयुज्यमानत्वात्॥ ८१ ॥

मावेत्यादि। हे अकार्य्यज्ञे ऽविशेषज्ञे नमस्यन्तं प्रणमन्तं जगत्पतिं मां त्वं मावमंस्थाः नावजानीहि जगन्नमस्यो ऽप्यहं त्वां नमस्यामीति नावज्ञा युक्तेति भावः कर्मक्रियेति कर्मत्वं कर्मक्रियेत्यत्र कर्मक्रियाख्याप्यं तच्च चतुर्व्विधं प्राप्यनिर्वर्त्त्यविकार्य्यानीप्सितभेदात् इदन्तु प्राप्यं कर्म्म प्राप्तुमिष्टत्वात् तच्च पूर्व्वमवमननक्रियया जगत्पतिर्व्याप्यते पश्चान्नञ्योगेन वहिरङ्गेन न तन्निवृत्तिः नमः करोतीति नमस्यपोवरिवइति क्यः मयि संहृष्टे सति अधन्यं मन्दभाग्यं काकुत्स्थं रामं का कामयेत् इच्छेत इदमनीप्सितं कर्म्म ॥ ८१ ॥

यः पयोदोग्धि पाषाणं सरामाद्भूतिमाप्नुयात्। रावणं गमय प्रीतिं बोधयन्तं हिताहितं ॥ ८२॥

यःपेत्यादि। यथा पाषाणात् पयोन सम्भवति तथा रामादपि विभूतिरिति नैराश्यं दर्शयति पयसः पूर्व्वेणैव कर्मसंज्ञा पाषाणस्याकथितञ्चेत्यनेन रावणं गमय प्रीतिं भवत्या सह प्रीतिं गच्छन्तं गमय प्रीतिं स्वयमेव हिताहितं भवतीं बुध्यमानां बोधयन्तं गतिबुद्धीत्यादिना कर्मसंज्ञा गतिबुध्योरण्यन्तावस्थायां तयोः कर्तृत्वात्॥ ८२ ॥

यद्दत्यादि। यः पाषाणं पयोऽधोऽग्नि पाषाणेन हेतुना पयांसि धारयति सएव रामाद्भूतिं प्राप्नुयात् सम्भावनायां लिङ् यथा पाषाणात् पयोन सम्भवति तथा रामादपि भूतिरिति भावः या आर्थेत्यादिना दुहादिकर्म्मकत्वं पाषाणमिति कर्म्महेतोः कर्म्मत्वं पयद्ति निर्व्वर्त्त्यं कर्म्म तस्मात् रावणं मां प्रीतिं गमय प्रापय हितप्राप्तिनञ्च बोधयन्तं भवतीमित्युत्तरश्लोकस्थमिहानुषज्यते योऽश्नोत्तेरिति गतिज्ञानार्थयोः प्रयोज्यकर्त्तुः कर्म्मत्वं॥ ८२॥

प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयं। किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणं॥ ८३॥

●प्रीतइत्यादि। अहं प्रीतः सन् भुवनत्रयं तत्समुत्थं भोज्यं भोक्तुं योग्या भवतीं भोजयिष्यामि प्रत्यवसानार्थत्वात्कर्म्मसंज्ञा प्रत्यवसानमभ्यवहारः अकर्त्रभिप्राये णिचस्त्वेत्यात्मनेपदं न भवति विलपन्तं विविधं भाषमाणं किं विलापयसेऽत्यर्थं नाहं त्वामिच्छामीति ब्रुवाणा अत्र शब्दकर्म्मकत्वात् कर्म्मसंज्ञा कर्त्रभिप्राये णिचस्त्वेत्यात्मनेपदं तस्मादिदं प्रार्थये पार्श्वे रावणं शायय अत्राकर्म्मकत्वात्कर्म्मसंज्ञा॥ ८३॥

प्रीतइत्यादि। अहं प्रीतः सन् भवतीं त्वां भुवनत्रयं भोजयिष्यामि भुवनत्रयसम्बन्धिसुखोपभोगो भुवनत्रयभोगेन लक्ष्यते पूर्व्ववद्गमनार्थस्य प्रयोज्यकर्त्तुः कर्म्मत्वं किं रावणं मां अत्यर्थं विलाप

यसे विविधं गाययसि शब्दार्थत्वात् प्रयोज्यस्य कर्मत्वं तथादिदं प्रार्थये मां पार्श्वे शायय स्वापय प्रार्थनायां शी शीङोऽकर्मकत्वात् प्रयोज्यस्य कर्मत्वं ॥ ८३ ॥

आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय। कः शक्रेण कृतं नेच्छेदधिमूर्द्धानमञ्जलिं ॥ ८४ ॥

इति कारकाधिकारः ॥

आज्ञामित्यादि। रक्षांसि तदाज्ञां कुर्व्वन्त्येव कारय प्रियाणि च वस्तुन्यन्योनि मामुपहरन्तमुपहारय उत्पादय हृक्रोरन्यतरस्यामिति कर्म्मसंज्ञा शक्रेण कृतं विरचितं अञ्जलिमधिमूर्द्धानं अधिगतः प्राप्तो मूर्द्धा येनेति कोनेच्छेत् स्वतन्त्रश्चइति कर्तृसंज्ञा शक्रेण प्रणतोऽहमित्यर्थः प्रयोज्यकर्त्ता नोदाहृतोऽस्वातन्त्र्यात्तथा मुदाहृतत्वात्। इति कारकाधिकारः ॥ ८४ ॥

आज्ञामित्यादि। रक्षोभिराज्ञां कारय तान्याज्ञाकरणाय प्रेरय मां प्रियाणि अभिलषणीयानि उपहारय प्रियाण्युपहर्त्तुमानेतुं मां प्रेरय हृक्रोराभिवादिदृशस्त्वेति प्रयोज्यस्य विकल्पेन कर्म्मत्वं कर्म्मत्वाभावपक्षे साधनहेत्वित्यादिना कर्त्तरि तृतीया की जनः शक्रेण कृतं विरचितं अधिमूर्द्धानमञ्जलिं न इच्छेत् अपि तु सर्व्व एवेच्छति इन्द्रेणाहं प्रणतः त्वामपि मत्प्रियामसौ नमस्करिष्यतीति भावः मूर्द्धानमधिगतः प्राप्तः अधिमूर्द्धा अधिगतो मूर्द्धा येनेति वा अत्र स्वतन्त्रकर्त्तोदाहृतः औप्रयोज्यकर्त्ता

इर्शिनएव आर्य्येत्यादिना उक्तकर्त्तरि प्रथमा कर्त्ता क्रियामुख्यः प्रयोजकस्य । इति कारकाधिकारः ॥ ८४ ॥

वचनं रक्षसां पत्युरनुक्रुद्धा पतिप्रिया। पापानुव सितं सीता रावणं प्राब्रवीद्वचः ॥ ८५ ॥

इतः प्रभृति कर्म्मप्रवचनीयमधिकृत्याह । वचनमित्यादि रक्ष सां पत्यूरावणस्य वचनमनुलक्षीकृत्य अनुर्लक्षणइति कर्म्मप्रवच नीयसंज्ञायां द्वितीया क्रुद्धा सती सीता पतिप्रिया पतिः प्रियोय स्याइति रावणं प्राब्रवीद्वचोवक्ष्यमाणं पापानुवसितं पापेन संयुक्तं तृतीयार्थइत्यनेन कर्म्मप्रवचनीयसंज्ञायां द्वितीया पाप मन्ववसितइति द्वितीयेति योगविभागात्सः सुपुपेति वा ॥ ८५ ॥

अथ कर्म्मप्रवचनीयाधिकारः तच लक्षते धिक्समयेत्यादि सूत्रसमूहनिर्द्दिष्टविभक्त्यधिकारः। वचनमित्यादि पतिः प्रियो यस्याः सा सीता रक्षसां पत्यूरावणस्य वचनमनुलक्षीकृत्य तेन हेतुना वा क्रुद्धा सती रावणं वचोवक्ष्यमाणं प्राब्रवीत् राव णं कीदृशं पापानुवसितं पापमनु पापेन सह वसितं सम्बद्धमिति द्वितीयासमासः षिञ्गन्धने अवपूर्व्वात् क्तः वातोवाप्योरिति अवस्यालोपः धिक्समयेत्यादिना अनुयोगे द्वितीया वीप्सेत्थम्भा वचिह्नेऽभिस्तेषुभागेपरिप्रती। अनुर्लक्षे सहार्थे च हीनेऽनूपो मताविहेति वीप्सादिसम्बन्धं द्वितीया वक्ति अभ्यादयोद्योतका अनुरत्र चिह्नार्थे सहार्थे च चिह्नं लक्षणं हेतावप्यनुयोगे द्विती येति केचित् ॥ ८५ ॥

न भवाननुरामञ्चेदुपशूरेषु वा ततः। अपवाह्य छलाद्वीरौ किमर्थं मामिहाहरः॥ ८६॥

नेत्यादि। यदि भवाननुरामं रामाच्च हीन इत्यर्थः हीन इत्यनेन कर्मप्रवचनीयसंज्ञा अनुशब्दस्य स्वहीनार्थद्योतकः हीन स्योत्कृष्टापेक्षः उपशूरेषु वा शूरेभ्यो वा यद्यधिको भवान् उपो धिके चेति चकाराद्धीने उपशब्दस्य कर्मप्रवचनीयसंज्ञा यस्मा दधिकमित्यनेन सप्तमी उपशब्दस्याधिकद्योतनात् किमर्थं कनक मृगछलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतो नीत्वा मामिहा हरः लङ्कामानीतवान्॥ ८६॥

नेत्यादि। किं प्राब्रवीदित्याह। येयदि भवान् अनुरामं रा मात् हीनो नभवेत् यदि वा उपशूरेषु शूरेभ्यो यद्यधिको भवान् तदा किमर्थं किंनिमित्तं कनकमृगच्छलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतो नीत्वा त्वं मामिहाहरः लङ्कायामानीतवानसि समर्थो हि जित्वैवानयति छद्मोद्यमी पूर्ववदनुयोगे द्वितीया अनुर च हीनार्थे अधिके प्रार्थोपाधिभ्यामिति अधिकार्थोपयोगे सप्तमी ॥ ८६॥

उपशूरं न ते वृत्तं कथं रात्रिञ्चराधम। यत्संप्रत्य पलोकेभ्यो लङ्कायां वसतिर्भयात्॥ ८७॥

उपेत्यादि। हे रात्रिञ्चराधम कथं ते वृत्तं चरितं नोप शूरं शूरेभ्यो न हीनं उपोधिके चेति चकाराद्धीने उपशब्दस्य कर्म

प्रवचनीयसंज्ञा वधकाङ्क्षिन्नत्यधुना भयात्लङ्कायां जलपर्व्वत दुर्गायां वसतिः वसेरति वसिवर्त्तिभ्यश्चेत्यौणादिकः अपलोकेभ्यो लोकान् वर्जयित्वा अपपरीवर्जनइति कर्म्मप्रवचनीयसंज्ञायां पञ्चम्यपाङ्परिभिरिति पञ्चमी ॥ ८७ ॥

उपेत्यादि। हे रात्रिचराधम कथं ते तव वृत्तं चरितं शूरमुप शूरं शूरेभ्यो न हीनं शूरशब्दोऽत्र लक्षणया शूरवृत्तवाची धिक्समयेत्यादिना द्वितीया उपोऽत्र हीनार्थे यत् यस्मात् सम्प्रति भयाद्धेतोरपलोकेभ्यो लोकान् वर्जयित्वा लङ्कायां जलपर्व्वतदुर्गायां तव वसतिर्निवासः अन्यारभ्येत्यादिना अपयोगे पञ्चमी अपस्त्यागार्थे आङ्व्याप्तिसीमास्त्यागेऽन्यौ प्रतिदाननिधौप्रतीति अन्यौ पर्य्यपौ ॥ ८७ ॥

आरामदर्शनात्पाप विद्योतस्व स्त्रियः प्रति। सद्वृत्तान नु दुर्वृत्तः परिस्त्रीं जातमन्मथः ॥ ८८ ॥

आरेत्यादि। हे पाप आरामदर्शनात् रामदर्शनं यावत् आङ्मर्य्यादावचने पूर्व्ववत्पञ्चमी स्त्रियः प्रति योषितो लक्ष्यीकृत्य विद्योतस्व शोभस्व लक्षणेत्थंभूतेति कर्म्मप्रवचनीयत्वं परिस्त्रीं जातमन्मथः अत्र वीप्सायां कर्म्मप्रवचनीयत्वं ॥ ८८ ॥

आरामेत्यादि। हे पाप दुराचार आरामदर्शनात् रामदर्शनं यावत् स्त्रियः प्रति लक्ष्यीकृत्य विद्योतस्व शोभस्व पूर्व्ववत् सीमार्थाङ्योगे पञ्चमी धिक्समयेत्यादिना चिह्नार्थप्रतियोगे

द्वितीया त्वं कीदृशः सदृत्तान् सदाचारान् अनु दुर्व्वृत्तः दुश्चरि च: सदाचारेषु कथञ्चित् प्रकारं द्रोहादिकमापन्नोदुर्व्वृत्तोभव सीत्यर्थः पूर्व्ववदित्यम्भावार्थानुयोगे द्वितीया इत्यम्भावः कस्य चित्प्रकारस्यापत्तिः स्त्रीःपरि लक्षीकृत्य स्त्रीषु कथञ्चित्प्रकारं विहारित्वादिकमापन्नोवा जातकामः पूर्व्ववच्चिह्नार्थे इत्थम्भावा र्थे वा परियोगे द्वितीया वीप्सायां परिशब्दस्य कर्म्मप्रवचनी यत्वमिति जयमङ्गला न युक्ता वीप्सायां द्वित्वं लोकतः सिद्ध मिति टीकायामुक्तत्वात् क्वचित् सम्मुद्धान्तमिदं विशेषणद्वयं दृ श्यते ॥ ८८ ॥

अभिद्योतिष्यते रामोभवन्तमचिरादिह। उद्गूर्ण वाणः संग्रामे योनारायणतः प्रति ॥ ८९ ॥

अभीत्यादि। भवन्तमभि भवन्तं लक्षीकृत्य अभिरभागइति कर्म्मप्रवचनीयत्वं अचिरादिह लङ्कायां रामोद्योतिष्यते अवस्थते जाभविष्यति यउद्गूर्णवाणः उद्यतवाणः सङ्ग्रामे नारायणतः प्रति तेन तुल्यः प्रतिनिधिः प्रति प्रतिनिर्धितिः प्रतिनिधौ कर्म्मप्रवचनी यत्वं प्रतिः प्रतिनिधि प्रतिदाने च यस्मादिति पञ्चमी प्रतियोगे पञ्चम्यास्तसिः मुख्यसदृशः प्रतिनिधिः ॥ ८९ ॥

अभीत्यादि। भवन्तमभि लक्षीकृत्य रामोऽचिरादिह लङ्कायां द्योतिष्यते अवस्थतेजाभविष्यतीत्यर्थः पूर्व्ववत् चिह्नार्था भियोगे द्वितीया योरामः संग्रामे उद्गूर्णवाणउद्यतकाण्डः सन्

नाराचपात: प्रति तेन तुल्य: अन्यारभ्यैत्यादिना प्रतिनिध्यर्थे प्रतियोगे पञ्चमी प्रसक्तेरिति पञ्चम्याख्यम् ॥ ८९ ॥

कुतोऽधियास्यसि क्रूर निहतस्तेन पत्त्रिभि:। न सूक्तं भवतात्युग्रमतिरामं महोद्धत ॥ ९० ॥

कुत इत्यादि । हे क्रूर तेन रामेण उद्गूर्णबाणेन पत्त्रिभि: शरै: निहत: सन् कुतोऽधियास्यसि केन प्रकारेण नि:सरिष्यसि अधि परी अनर्थकाविति अधे:कर्म्मप्रवचनीयसंज्ञा धात्वर्थव्यतिरेकेणा र्थस्यानभिधानादनर्थकत्वं संज्ञा च गत्युपसर्गसंज्ञाबाधनार्थी तेन तिङि चोदात्तवतीति निघाताभावो द्रष्टव्य: पञ्चमी च प्रश्नाख्या नयोरित्युपसंख्यानात् भवति किमिति हनिष्यतीति चेत् यतो भवता न सूक्तं प्रशस्तमुक्तं सु: पूजायामिति कर्म्मप्रवचनीयत्वं गतिरनन्तर इति स्वराभाव: अत्युग्रमतिरौद्रं अतिरामं राम मधिक्षिप्य काकुत्स्थमधन्यमिति अतिरतिक्रमणे चेति कर्म्मप्रवच नीयत्वं चकारात्पूजायाञ्च तच्चात्युक्तमिति प्रयोग: हे महोद्धत ॥ ९० ॥

कुत इत्यादि । हे क्रूर तेन रामेण संग्रामे पत्त्रिभि: शरैर्निहत: सन् कुतस्त्वं अधियास्यसि सर्व्वतोभावेन कस्मात् नि:सरिष्यसि हे महोद्धत अतिरामं राममतिक्रम्य अवक्षिप्य अत्युग्रं अतिरौद्रं भवता न सूक्तं न शोभनमुक्तं रामाक्षेपकं तव पूर्व्ववचनं मिथ्यैवेति भाव: धिक्समयेत्यादिना अतियोगे द्वितीया ॥ ९० ॥

परिश्रेषं न नामापि स्थापयिष्यति ते विभुः। अपि स्थाणुं जयेद्रामो भवतोग्रहणं कियत् ॥ ९१ ॥

परीत्यादि। रामोविभुः प्रभुः ते परिश्रेषं नामापि संज्ञामपि न स्थापयिष्यति किन्तु देहं अपिः पदार्थेत्यादिना पदार्थे कर्म्मप्रवचनीयसंज्ञा पदस्य देहस्याप्रयुज्यमानस्यार्थे अपिशब्दोव र्त्तते अपि स्थाणुं जयेद्रामोयमाराध्याधिपत्यं प्राप्तवानसि तमपि स्थाणुं महादेवं जेतुं सम्भाव्यते भवतोग्रहणं कियत् स्वल्पेव न भवति अत्र संभावनायां कर्म्मप्रवचनीयत्वं सम्भावने लिङ् उपसर्गबाधनत्वात्संज्ञाया उपसर्गात्सुनोतीत्यादिना षत्वं न भवति ॥ ९१ ॥

परीत्यादि। सप्रभू रामस्ते तव परिश्रेषं नामापि संज्ञामपि न स्थापयिष्यति किं पुनः शरीरं अत्रापिशब्देन देहस्य समुच्चयात् अध्यार्थायां स्मृतौ नातिक्रमेऽतिः पर्य्यधी मतौ। अपिः पदार्थ संभाव्यगर्हानुज्ञासमुच्चये दृष्यनेनोपसर्गत्वाभावः तेन व्यवस्थानु कारेत्यादिना न समासः धातुपूर्व्वत्वनियमाभावः णीकःस्तुस्तुभे त्यादिना न षत्वञ्च परेस्त्वेतदर्थे कर्म्मप्रवचनीयसंज्ञा हता कुत स्तस्यैवं सामर्थ्यमित्याह रामः स्थाणुमपि जयेत् यमाराध्य त्वमा धिपत्यं प्राप्तवान् तमपि स्थाणुं महादेवं सजयेदिति सम्भाव्यते अपिशब्दः सम्भावनाद्योतकः तत्रैव स्थितेन रामेण बलाद्भवतो ग्रहणं कियत् अल्पायाससाध्यमेव पूर्व्ववत्षत्वनिषेधः ॥ ९१ ॥

अपिस्तुह्यपिसेधास्मांस्तथ्यमुक्तं नराशन। अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽभिकः॥ ९२॥

अपीत्यादि। हे नराशन मया तथ्यमुक्तं यन्नामापि न स्थापयिष्यतीति अस्मानपि स्तुहि साधूक्तमिति प्रशंस सेधापि षेति अपिति क्ङित्वाद्गुणाभावः अपिसेध निगृहाण यथेष्टं तथा क्रियतां मया तु सत्यमेवोक्तमिति भावः अत्रानुपसर्गे कामचारानुज्ञाने कर्म्मप्रवचनीयसंज्ञा किन्तु कृशानावग्नौ दर्पं अपिसिञ्चेः क्षरेस्त्वं अत्र गर्हायां लिङि रूपं योऽयं मय्यपि मद्विषयेऽपि अभिकः कामयिता अनुकाभिकेत्यादिना निपातितः उपसर्गसंज्ञाबाधनार्थत्वात् स्तौतिसेधिसिचां षत्वं न भवति॥ ९२॥

अपीत्यादि। हे नराशन परिशेषं न नामापि स्थापयिष्यतीति तथ्यं सत्यमेव मयोक्तं त्वमस्मान् अपिस्तुहि साधूक्तमिति प्रशंस अपिसेध निगृहाण यथा तवेच्छा तथैव क्रियतां मया तु सत्यमेवोक्तमिति भावः अत्रापिशब्दः समुच्चयेऽनुज्ञायां वा पूर्व्ववत्षत्वनिषेधः ष्टुञ्स्तुतौ षिधूशिवेशास्ते द्वौ रूपं त्वं कृशानौ वह्नावेव दर्पं अपिसिञ्चेः मुञ्च अत्रापिशब्दोगर्हायां पूर्व्ववत् षत्वनिषेधः यद्यपि जात्वपिभ्यां सदाचेपे इति कालसामान्ये गर्हायां की विहिता तथापि पदसंस्कारात् विधौ स्वौ अयतः स्यात् अत्र दर्पशब्देन दर्पजनकत्वाद्रेतउच्यते यस्त्वं मय्यपि मद्विषये अभिकः कामुकः॥ ९२॥

अधिरामे पराक्रान्तमधिकर्त्ता स ते वयं। इत्युक्त्वा मैथिली तूष्णीमासाञ्चक्रे दशाननं॥ ९३॥

अधीत्यादि। पराक्रान्तस्य शौर्यस्य रामईश्वितेत्यस्मिन्नर्थ अधिरामे पराक्रान्तं नपुंसके भावे क्तः अधिरीश्वरइति स्वस्वामि सम्बन्धे अधेः कर्म्मप्रवचनीयसंज्ञा यस्मादधिकमित्यादिना सप्तमी यश्चैवं सरामस्ते वयमधिकर्त्ता करिष्यति अत्र कर्म्मण्येव द्वितीया न कर्म्मप्रवचनीययुक्तइति विभाषाकृञीति या संज्ञा तस्या गत्युपसर्गसंज्ञाबाधनार्थत्वात् संज्ञापक्षे तिङि चोदात्तवतीति निघाताभावोद्रष्टव्यइति एवमुक्त्वा दशाननं मैथिली तूष्णीमासाञ्चक्रे तूष्णीं स्थितवती। इति कर्म्मप्रवचनीयाधिकारः॥ ९३॥

अधीत्यादि। रामः पराक्रमस्य स्वामीत्यर्थे अधिरामे अधिकेशार्थोपाधिभ्यामिति सप्तमी पराक्रान्तमिति भावे क्तः अधिरामे पराक्रान्तं यथा भवति तथा सरामस्ते तव वयं अधिकर्त्ता अधिकं करिष्यति स्वकीयपराक्रमेण वधं करिष्यतीत्यर्थः इति दशाननमुक्त्वा मैथिली तूष्णीं मौनेन आसाञ्चक्रे स्थितवती र्व्विजादीत्याम्। इति कर्म्मप्रवचनीयाधिकारः॥ ९३॥

ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः। वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन्॥ ९४॥

इत:प्रभृत्यनभिहितइत्यधिकृत्य विभक्तिविधानमाह। तत इत्यादि ततः सीतावचनादुत्तरकालं रावणः खड्गं समुद्यम्य उत्क्षिप्य कर्मणि द्वितीया क्रूरविग्रहः दुःप्रेक्ष्यत्वात् वैदेहीमन्तरा क्रुद्धः वैदेह्यामध्ये कुपितः अन्तरान्तरेण युक्तइति सप्तम्यपवादाद्द्वितीया अन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे आधेयञ्चात्र क्रुद्धोरावणः क्षणमूचे उक्तवान् उक्तिक्रियया क्षणस्य कालस्य साकल्येन सम्बन्धात् कालाध्वनोरिति द्वितीया विनिश्वस्य क्रोधात्॥ ८४॥

अथानभिहिताधिकारः। अथानभिहितइत्यधिकृत्य पाणिनिना या द्वितीयादिविभक्तयोविहितास्ताः कथ्यन्ते स्वमतेऽनभिहिताधिकाराभावेऽपि उक्ते कर्मादौ प्रथमा स्यात् पारिशेष्यादनभिहितइत्यवगम्यते। ततइत्यादि सीतावचनानन्तरं रावणः क्रूरविग्रहोरोषात् दुष्प्रेक्ष्यशरीरः सन् खड्गमुद्यम्य उत्क्षिप्य क्षणं विनिश्वसन् ऊचे कीदृशः वैदेहीमन्तरा सीतायामध्ये क्रुद्धः मध्यभागं केन्दुमुद्यतइत्यर्थः किम्वा रावणपरिजनञ्चेत्यध्याहार्य्यं वैदेहीं रावणः परिजनञ्चान्तरा क्रुद्धः वैदेह्यारावणपरिजनस्य चान्तरामध्ये कुपितः सन्नित्यर्थः खड्गमिति कर्मणि द्वितीया अन्तराशब्दोमध्यार्थः तद्योगे धिक्युक्तमयेत्यादिना द्वितीया क्षणमिति सदाध्वादिव्याप्ताविति द्वितीया विनिश्वासक्रियया वचनेन वा तस्यातिसंयोगसम्बन्धात्॥ ८४॥

चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी। न मासे प्रतिपत्तासे माञ्चेन्मर्त्तासि मैथिलि॥ ८५॥

चिरेत्यादि। हे मैथिलि चिरेणापि कालेनानुगुणमनुकूलं मया प्रोक्तापि सती प्रतिपत्तिपराङ्मुखी उक्तस्यार्थस्यानुष्ठानं प्रतिपत्तिः तस्यां पराङ्मुखी इदानीं यदि त्वं मासि त्रिंशद्दिवसलक्षणे मां न प्रतिपत्स्यसे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि उभयमपि लुटि रूपं तत्र चिरेण प्रोक्तेत्यपवर्गे तृतीया विवक्षितार्थप्रकाशनं फलं तस्य प्राप्तौ तत्क्रियापरिसमाप्तिरपवर्गइति मां मासेन प्रतिपत्स्यसइति सप्तमीपञ्चम्यौ कारकमध्यइति सप्तमी कर्म्मकर्त्तोः कारकयोर्मध्यत्वात् मासस्य ॥ ९५ ॥

चिरेणेत्यादि। हे मैथिलि चिरेण कालेन मयानुगुणं अनुकूलं प्रोक्तापि तस्योक्तस्य प्रतिपत्तिरनुमतिस्ततः पराङ्मुखी त्वमधुना चेद्यदि मासे त्रिंशद्दिनपरिमिते काले मां न प्रतिपत्स्यसे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि खड्गप्रहारेणेत्यर्थात् मासइति व्याप्त्यविवक्षया न द्वितीया सत्यामपि व्याप्तौ निर्धारे अधिकेन क्रियान्तःकालाध्वनोश्च पोषेति सप्तमी आद्यैका वचनक्रिया अपरा च प्रतिपत्तिक्रिया तन्मध्ये मासः कालस्तेन तद्विषयः मासे अनतिक्रान्ते सतीत्यध्याहृत्य पदं साध्विति श्रीपतिः प्रतिपूर्व्वपदोम्लङस्य स्यां रूपं ॥ ९५ ॥

प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन्। भयानि दत्त सीतायै सर्व्वायूयं कृते मम ॥ ९६ ॥

प्रायुङ्क्तेत्यादि। रावणो राक्षसीर्भीमाभयानकाः प्रायुङ्क्त समादिष्टवान् लङि रूपं मन्दिराय प्रतिव्रजन् गृहाय प्रतिव्रजन्

गत्यर्थकर्म्मणीत्यादिना तु चतुर्थी कर्मप्रवचनीयाधिकारएव दर्शितत्वात् किमादिश्वदित्याह सर्व्वायूयं सीतायै भयानि दत्त लोटि रूपं चतुर्थीसम्प्रदाने संपूज्याहृत्य प्रकर्षेण दीयतइति सम्प्रदानं मम कृते मदनुग्रहनिमित्तं ॥ ८६ ॥

प्रायुङ्क्तेत्यादि। रावणोमन्दिराय प्रतिव्रजन् गृहं प्रति गच्छन् भीमाभयानकाराक्षसीः प्रायुङ्क्त समादिष्टवान् गत्यर्थमन्यढेइति कर्मणिचतुर्थी किमादिश्वदित्याह सर्व्वायूयं मम कृते मन्निमित्तं मत्कार्य्यस्य वा सीतायै भयानि दत्त प्रयच्छत संप्रदाने चतुर्थी यद्यपि स्वस्वत्वध्वंसपूर्व्वेत्यादिलक्षणं दानं भयस्य न सम्भवति आरोपणार्थएव ददातिस्तथापि दिसाशब्दस्य विवक्षामात्रवचनत्वात् साधुत्वं कृतेशब्दोनिमित्तार्थोऽव्ययः क्विपि तादर्थ्ये वा चतुर्थी ॥ ८६ ॥

गते तस्मिन् समाजग्मुर्भयाय प्रति मैथिलीं। राक्षस्यो रावणप्रीत्यै क्रूरश्चोचुरलं मुहुः ॥ ८७ ॥

गतइत्यादि। तस्मिन् रावणे गते सति राक्षस्यः समाजग्मुः सम्भूय गताः समोगन्त्कीत्यादिना आत्मनेपदं न भवति आङा व्यवहितत्वात मैथिलीं प्रति लक्षीकृत्य भयाय सीतायै भयं दातुं क्रियार्थोपपदस्य कर्मणिस्थानिनइति चतुर्थी ददातेः क्रियार्थोपपदस्य स्थानिनः प्रयुज्यमानस्य भयं कर्म क्रिया चात्र समागमः

तत्रोपपदं क्रियार्थमिति क्रूरञ्च भयानकं मुहुः प्रतिक्षणं अलं पर्य्याप्तमूचुः किंवत्यः रावणप्रीत्यै रावणस्यैवं प्रीतिः स्यादिति तुमर्थाच्चभाववचनादिति चतुर्थी क्रियार्थोक्रियार्थायामिति तुमुना समानार्थत्वात् भाववचनाश्चेत्यनेन विहितस्य क्तिनः क्रियार्थ उपपदं क्रूराभिधानं ॥ ९७ ॥

गतेइत्यादि। तस्मिन् रावणे गते सति मैथिलीं प्रति लक्ष्मी कृत्य भयाय सीतायै भयं दातुं राक्षस्यः समाजग्मुः आकृष्यव धानात् समोगमृच्छेति न मं भयायेति नित्यं कर्मणि तुमोऽप्र योगिनइति चतुर्थ्यर्थे परस्मै रमते तादर्थ्यएव मैथिलीमिति धिक्समयेत्यादिना प्रतियोगे द्वितीया अथ रावणप्रीत्यै क्रूरं कठोरं अलं अत्यर्थं मुहुर्म्मुहुर्वारं वारं ऊचुः क्रूरमिति क्रियाविशे षणे द्वितीया ॥ ९७ ॥

रावणाय नमः कुर्य्याः स्यात्सीते स्वस्ति ते ध्रुवं। अन्यथा प्रातराशाय कुर्य्याम त्वामलं वयं ॥ ९८ ॥

रावेत्यादि। हे सीते रावणाय नमः कुर्य्याः रावणं नमस्कुरु एवञ्च सति ते तुभ्यं स्वस्ति कल्याणं ध्रुवं स्यात् युष्मच्छब्दस्य चतुर्थ्ये कवचनान्तस्य ते आदेशः नमस्कृत्वेति पाठान्तरं तत्र नमस्कृत्वा स्थितायै तुभ्यमित्यध्याहृत्य योज्यं अन्यथा असमानकर्तृकत्वात् क्त्वाप्रत्ययोन घटते नमस्कृत्येति पाठान्तरं साक्षात्प्रभृतिषु नम

व्यन्वस्य विकल्पेन गतिसंज्ञा तदभावपक्षे नित्यं गतिसंज्ञाया भावे सत्वादेशः नमस्पुरसोर्गत्योरिति विसर्ज्जनीयस्य सकारादेशस्य न भवतीति अन्यथेति यदि न नमस्कुर्याः तदा अलमा त्मरक्षाय प्रातर्भोजनाय त्वां कुर्य्याम वयमित्यूचुः नित्यंक्तिन इति मलोपः रावणायेत्यादिषु नमःस्वस्तीत्यादिना चतुर्थी ॥ ९८ ॥

रावणायेत्यादि। किमूचुरित्याह हे सीते त्वं रावणाय नमः संज्ञां कुर्याः तेनैव ध्रुवं ते तुभ्यं स्वस्ति कुशलं स्यात् सकारार्थवशादित्यादिना नमःस्वस्तियोगे चतुर्थी नमःशब्दोऽयं यदा वाचक एव तदा तद्योगे चतुर्थीति बोध्यं नाराचमं नमस्कृत्येत्यादिषु नमःशब्दो द्योतकः क्रियैव प्रधानं वक्ति तेन तद्योगेन चतुर्थी किन्तु द्वितीया नमस्कुर्य्यादिति सकारवत्पाठे हस्तेपाणावित्यादिना साक्षादादित्वात्पक्षे समासः सेतुकखपफेवेति पक्षे विसर्गस्य सकारः नमस्कृत्येति पाठे स्थितायाइत्यध्याहार्य्यं विष्णुं नत्वा स्तौतीत्युदाहरणेन एककर्त्तृकधातुद्वययोगे पूर्व्वकालेक्त्वाप्रत्यया पितत्वात् अन्यथा यदि रावणं न प्रणमसि तदा प्रातराशाय प्रातर्भोजनायालं समर्था त्वां वयं कुर्य्याम प्रातर्भोक्ष्यामइत्यर्थः अलंशब्दः समर्थत्वेन तद्योगे चतुर्थी ॥ ९८ ॥

तृणाय मत्वा ताः सर्व्वा वदन्तीस्त्रिजटावदत्।
आत्मानं हत दुर्व्वृत्ताः स्वमांसैः क्रियतामनं ॥ ९९ ॥

तृणेत्यादि। अथानन्तरं राक्षसीर्वदन्तीः त्रिजटा रावणस्वसा अवदत् उक्तवती तृणाय मत्वा तृणमिव सङ्गणय्य मन्य

अथमक्त्वा षद्वारयेति षड्योगे तृतीया अधेन मृत्: तन्बी भेद के तृतीया श्यामा भीते सुखोष्णवर्मा क्वी शीते वा सुखप्रीतथा। तत्स्का सुवर्णाभा सा स्त्री श्यामेति कथ्यते। श्यामवर्णेनेत्यन्ये सुखो यथा भीमैर्ननेत्या॥ १००॥

तास्तया तर्ज्जिताः सर्व्वामुखैर्भीमायथागतं। ययुः सुप्तुप्तवस्तत्र्यं भीमैर्वन्धनकर्म्मभिः॥ १०१॥

तादृत्यादि। ताराक्षसस्तथा त्रिजटया तर्जिताभर्त्सिताः सुपुप्तवः स्वप्तुमिच्छवस्तत्र्यं प्रयणीयं ययुर्गताः यथागतं यतोयत स्तस्मादुत्यायागताः यथासादृश्यइति वीप्सायामव्ययीभावः मुखै र्भीमारौद्राः मुखानां विकृतत्वात् येनाङ्गविकारइति तृतीया भीमैर्वन्धनकर्मभिः उपलक्षिताः इत्थंभूते तृतीया॥ १०१।

तादृत्यादि। ताः सर्व्वाराक्षस्यः तथा त्रिजटया तर्ज्जिताभ र्त्सिताः सत्यः सुपुप्तवः स्वपितुमिच्छवस्तल्पं ययुः यथागतं यस्मा द्यस्मात् उत्थायागतास्तच तथैव वीप्सायामव्ययीभावः मुखैर्भी माः मुखविकारोपलक्षिताः भेदके तृतीया येनाङ्गेनाङ्गिनोविक्ष तिर्लक्ष्यते तस्मादिति परः भीमैर्व्वधनकर्म्मभिरुपलक्षिताः त्रिप्रे यत्रे तृतीया तल्पं प्रय्याद्दारेष्वित्यमरः॥ १०१॥

गतासु तासु मैथिल्याःसंज्ञानानोऽनिलात्मजः। आयातेन दशास्यस्य संश्रितोऽन्तर्हितश्चिरं॥ १०२॥

गतेत्यादि। तासु राक्षसीषु गतासु अनिलात्मजो हनूमान् राम संकथां प्रास्तावीदिति वक्ष्यमाणेन सम्बन्धः मैथिल्या सञ्जानानः इयं सेत्यवगच्छन् संज्ञोऽन्यतरस्यामिति कर्मणि तृतीया सञ्जानानः स्मृत्वेति तक् दृशास्यायातेनागमनेन हेतुना चिरमन्तर्हितो निलीनः स्थितः हेताविति तृतीया॥ १०२॥

गताखित्यादि। तासु राक्षसीषु गतासु सतीषु अनिलात्मजो हनूमान् रामसङ्कथां प्रास्तावीत् प्रावर्त्तयदिति वक्ष्यमाणश्लोके नान्वयः कीदृशः मैथिल्या संजानानः सैवेयमित्यवगच्छन् संज्ञो स्मृताविति कर्मणि तृतीया सम्प्रतेरस्मृताविति सं दृशास्यस्या यातेनागमनेन हेतुना अन्तर्हितोविलीनः सन् चिरं संस्थितः हेतौ तृतीया स्वभावश्चेति दृशास्यात् कर्त्तरि षष्ठी सम्बन्धविवक्षया वा॥ १०२॥

क्षणाद्दशद्रवोन्मुक्तो वियोगेन क्रतुद्विषः। हेतो र्बोधस्य मैथिल्याः प्रास्तावीद्रामसंकथां॥ १०३॥

क्षणादित्यादि। क्षणाद्धेतोर्वृक्षद्रवोन्मुक्तोऽथवा स्थानान्तरं गतवान् अकर्त्तृक्षणइति पञ्चमी क्षणस्याकर्त्तृहेतुत्वात् क्षणेन वञ्चित इवेति नोक्तं अप्रयोजकं कर्त्तृत्वादपस्य उन्मुक्तः क्रतुद्विषो रावणस्य वियोगेन विश्लेषेण विभाषागुणेऽस्त्रियामिति पक्षे तृतीयोदाहृता न पञ्चमी वियोगस्य गुणपदार्थत्वात् किमिति संकथां प्रास्तावीदित्याह हेतोर्बोधस्य मैथिल्याः एवरामदूत इति मैथि

त्पञ्चमी भावः स्वभावेऽभिप्राये चेष्टायमात्मजन्मसु । क्रिया लीलापदार्थेषु इतू जन्तुविशतिष्विति विश्वः ॥ १०५ ॥

इतरोरावणादेषराघवानुचरोयदि । सफलानि निमित्तानि प्राक्प्रभातात्ततोमम ॥ १०६ ॥

इतइत्यादि । यदि रावणादितरः प्रतियोगी राघवानुचरः राघवार्थकारी इतरयोगे पञ्चमी ततोमम सफलानि स्वप्नदर्शनादीनि निमित्तानि प्राक्प्रभातात् आदित्योदयात्पूर्व्वस्मिन् काले अन्यथा हि प्रभातादुत्तरकालं सफलानि उत्तरपदयोगे पञ्चमी ॥ १०६ ॥

इतरइत्यादि । एषयदि रावणादितरोऽन्यः राघवानुचरः रामप्रयोजनकारी भवेत् मम प्राक् प्रभातात् सूर्य्योदयात् पूर्व्वकाले यानि शुभस्य निमित्तानि स्वप्नदर्शनादीनि तानि मम सफलानि स्युः इतरशब्दोऽन्यार्थः तद्योगे दिक्शब्दयोगे च पञ्चमी दिक्शब्दाद्दिग्देशकालेषाम् ॥ १०६ ॥

उत्तराच्च वसत्यामः समुद्रान्नगरीं पुरं । अवैलवणतोयस्य स्थितां दक्षिणतः कथं ॥ १०७ ॥

उत्तरेत्यादि । रामदूतोऽयमिति न सम्भाव्यते यतः समुद्रादुत्तरा या दिक् तस्यामुत्तराहि वसन् रामः आहिवदूरे

कत्वाचेति तत्रादिप्रत्ययान्तेन उत्तरादिशब्देन योगे समुद्रा दिति पञ्चमी लवणतोयस्य लवणसमुद्रस्य दक्षिणतोदक्षिणस्यां दिशि स्थितां रक्षसां पुरीं लङ्कां कथमवैत् ज्ञातवान् दक्षि णतइति दक्षिणोत्तराभ्यामतसुच् तदन्तेन योगे षष्ठ्यतसर्थप्रत्य येनेति षष्ठी॥ १०७ ॥

उत्तरेत्यादि। अत्र रामदूतोऽयं न सम्भाव्यते यतइतः समु द्रादुत्तरस्यां दिशि वसन् रामो लवणतोयस्य समुद्रस्य दक्षिणस्यां दिशि स्थितां रक्षसां पुरं लङ्कां कथमवैत् ज्ञातवान् दक्षिणोत्त रादाहीति सप्तम्यान्ताच्चि अन्यारभ्येति दिक्शब्दयोगे पञ्चमी तसप्रत्येरिति सप्तम्यास्तस् तद्योगे समार्थैनेत्यादिना षष्ठी॥ १०७ ॥

दण्डकान्दक्षिणेनाहं सरितोऽद्रीन् वनानि च।
अतिक्रम्याम्बुधिञ्चैव पुंसामगममाहृता॥ १०८॥

दण्डेत्यादि। दण्डकानामदूरे या दक्षिणा दिक् तस्यामिति प्रथमान्तदस्यामिति सप्तम्यन्तादेनप्प्रत्ययः तदन्तेन योगे एन पाद्वितीयेति द्वितीया दक्षिणेन दण्डकानां दक्षिणस्यां दिशि सरितोऽद्रीन्वनानि च अम्बुधिं चातिक्रम्य पुंसामगमनं यत्र तद्गतिश्रिगमस्यैनप् अहमाहृता आनीतेति तत्कथमवैदित्यधि न्वयत्॥ १०८॥

दण्डकानित्यादि। दण्डकानामदूरे दक्षिणस्यां दिशि स्थि तानि सरितोऽद्रीन् वनानि च अम्बुधिं चातिक्रम्य पुंसामगमानि

ख्यातं यथा स्यात्तथा द्दमावृता पुंनामगम्यं देशं प्रापिता वा न विद्यते गमो ध्यानं यत्र तत्क्षणमवैदिति सम्बन्धः। यनोऽपीति यस्मा त्पएनः तद्योगे धिक्समयेत्यादिना द्वितीया एनोऽपञ्चम्या इति परस्वरयात् सन्निहितसमासानामभिधानं नियामकमित्युक्तेर दूरार्थमपि बोध्यं दण्डकाशब्दो वनेऽपि स्त्रीलिङ्गः नित्यबहुवच नान्तः पुंलिङ्ग इत्यन्ये तन्मते दण्डकानिति पाठः॥ १०८ ॥

पृथङ्नभस्वतश्चण्डाद्वैनतेयेन वा विना। गन्तुमुत्स हते नेह कश्चित्किमुत वानरः॥ १०९ ॥

पृथगित्यादि। नभस्वतो वातात् चण्डात् पृथक् वायुं त्यक्त्वा वैनतेयेन वा विना गरुडं वा वर्जयित्वा पृथग्विनेत्यादिना तृतीया पञ्चम्यौ इह लङ्कायां कश्चित् गन्तुं नोत्सहते किमुत वानरः ॥ १०९ ॥

पृथगित्यादि। चण्डान्नभस्वतोवातात् पृथगन्यः वैनतेयेन गरुडेन वान्यः कश्चिदिह गन्तुं न उत्सहते किं पुनर्व्वानरः इत्येवम चिन्तयदिति सम्बन्धः पृथक्शब्दोऽन्यार्थस्तेन तद्योगे विना योगे च अन्यारब्धेत्यादिना पञ्चमी नभस्वन्तं वैनतेयञ्च वर्ज्जयित्वे त्यर्थ इति केचित् किमुतेत्यव्ययं पुनरर्थे॥ १०९ ॥

इति चिन्तावतीं तस्य कल्पान्तसमासाद्य कपिद्विपः। मुक्तां स्तोकेन रक्षोभिः प्रोचेऽएवं रामकिङ्करः॥ ११० ॥

इतीत्यादि। एवमुक्तेन प्रकारेण चिन्तावतीं कपिद्विपो हनूमान् लङ्कात्समासाद्य कथमभ्युपगम्य अहं रामकिङ्करः रामप्रेषणकर इति प्रोचे मुक्तां स्तोकेनाल्पेन रक्षोभिः कर्तृभिः करणे न च स्तोकाल्पेत्यादिना तृतीयापञ्चम्यौ लङ्कस्तोकयोरसत्त्ववचनयोः करणत्वात्॥ ११०॥

इतीत्यादि। कपिद्विपः कपिश्रेष्ठो हनूमान् तां सीतां लङ्कात् चिरकालान्वेषणेन समासाद्य प्राप्य अहं रामस्य किङ्करः परिचारक इति प्रोचे वदति स्म कीदृशीं एवमुक्तप्रकारेण चिन्तायुक्तां रक्षोभिः स्तोकेनाल्पेन मुक्तां त्यक्तां करणे कतिपयस्तोकाल्पकृच्छ्रादसत्त्व इति सूत्रेण विभाषया पञ्चमीमाह परः स्वमते लङ्कादिति हेतौ पञ्चमी स्तोकेनेति करणे तृतीया॥ ११०॥

विप्रकृष्टं महेन्द्रस्य न दूरं विन्ध्यपर्व्वतात्। नानभ्यासे समुद्रस्य तव माल्यवति प्रियः॥ १११॥

यदि त्वं रामकिङ्करः क्वासावित्याह विप्रेत्यादि। माल्यवति पर्व्वते तव प्रियो रामः महेन्द्रस्य पर्व्वतस्य विप्रकृष्टं दूरं विन्ध्यपर्व्वताच्च न दूरं दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति षष्ठीपञ्चम्यौ महेन्द्रपर्व्वतविन्ध्ययोर्दूरविप्रकृष्टयोस्तु दूरान्तिकार्थेभ्यो द्वितीया चेति द्वितीया नानभ्यासे न दूरे समुद्रस्य दूरान्तिकार्थैरिति षष्ठी माल्यवति सप्तम्यधिकरणे चेति सप्तमी चकाराद्दूरान्तिकार्थेभ्यश्च सत्त्वभावेनेत्यनेनानभ्यास इति सप्तमी॥ १११॥

विमित्यादि। यदि त्वं रामाकृष्टस्तदा कायाविशमरहमु च्यते नव प्रियात्माऽज्ञवति पर्व्वते वर्त्तते महेन्द्रस्य पर्व्वतविशेष स्य न विप्रकृष्टं न दूरं विन्ध्यमाद्यः पर्व्वतात् न दूरं समुद्रस्य वा गम्भ्यासे न दूरे वारादर्थैरिति विन्ध्यपर्व्वतशब्दात् पक्षे पञ्चमी तदप्रकृतिपक्षे सम्बन्धे षष्ठ्येव आरादर्थैरिति दूरान्तिकार्थैः दूरान्तिकार्थादसत्त्वेऽम्टाङसिङस्वेति परः स्वमते विप्रकृष्टा दयोर्देशार्थत्वे विवक्षिताः स्थितिक्रियात्वर्थाल्लभ्यत एव तेनासी त्यथाशारात् देशाध्वकालभावकाढैरिति पाक्षिककर्म्मत्वं कर्म्म त्वाभावपक्षे सप्तमी ॥ १११ ॥

असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनं। तस्मिन्
प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥

असमित्यादि। दशवदने असंप्राप्ते अप्रविष्टे अहमचेतितः सन् इदं वनमशोकवनिकाख्यं प्रविष्ट इति तस्मिन्प्रतिगते त्वां द्रष्टु मुपाक्रंसि समुत्सहे स्म यस्य च भावेनेति सप्तमी कपेः प्रवेशोपक्र मयोः रावणसंप्राप्तिप्रतिगमनक्रियाभ्यां लक्ष्यमाणत्वात् उपाक्रं सीति उपपराभ्यामित्यनेन वृत्त्यादिषुसर्गउत्साहे क्रमेस्तङ् उत्त मपुरुषैकवचनं इट् स्नोक्रमोरनात्मनेपदनिमित्त इति सिच् इट् नभवति ॥ ११२ ॥

असमित्यादि। रावणे असंप्राप्ते अनायाते सति अहमचेतितो ऽज्ञातः सन्निदं वनं प्रविष्टः प्रवेशस्य गतिविशेषत्वात् गत्यर्थाढेति कर्त्तरि क्तः तस्मिन् प्रतिगते सति त्वां द्रष्टुं साक्षात्कर्त्तुं अहं

उपार्क्षि उद्यतोऽस्मि गेपादारक्षदति मं व्याधिः उपार्क्षि उक्ता
ई हतवानस्मीति बाद्यः इत्युक्तायतामनदति मं कालभावाधा
रमिति उभयत्र भावे सप्तमी ॥ ११२ ॥

तस्मिन् वदति रुष्टोऽपि नाकार्षं देवि विक्रमं। अ
विनाशाय कार्य्यस्य विचिन्वानः परापरं ॥ ११३ ॥

यद्याद्दावेव प्रविष्टोऽसि तर्हि किमिति स्वकर्म्म न दर्शितवानसी
त्याह। तस्मिन्नित्यादि हे देवि तस्मिन्वदति रुष्टोऽपि विक्रमं नाका
र्षं तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः षष्ठी चानादरे
इति चकारात्सप्तमी किमर्थं कार्य्यस्य सन्देशकथनादेरविना
शाय विचिन्वानः परापरं पौर्व्वापर्य्यं निरूपयन् कर्त्तभिप्रायेतङ्
॥ ११३ ॥

तस्मिन्नित्यादि। हे देवि तस्मिन् रावणे वदति वदन्तं तं
अनादृत्य रुष्टोऽप्यहं विक्रमं नाकार्षं न कृतवान् स्वामीश्वराधि
पतीत्यादिना अनादरे सप्तमी तस्मिन् वदति सतीति भावे
सप्तमीति विद्यासागरः कुतइत्याह यतोऽहं कार्य्यस्य सन्देशकथ
नस्य अविनाशाय अविघाताय परापरं विचिन्वानः परं यद्भवि
ष्यति विरोधादि अपरञ्च यद्भूतं सन्देशकथनार्थमागमनादि
तत्सर्व्वं विचारयन् उत्तरे सति कथं न पूर्व्वस्य बाधइति चिन्त
यन् ॥ ११३ ॥

वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा। जातो रामस्य सुग्रीवस्ततो दूतोऽहमागतः॥ ११४॥

कथं वानरस्त्वं तस्य किंकरइत्याह। वानरेत्यादि वानरेषु स्वामी यः कपिः सुग्रीवः स नरेष्वधिपतेरामस्य सखा जातः स्वामी श्वरेत्यादिना षष्ठीसप्तम्योर्विधानात् सप्तम्युदाहृता ततोऽहं दूत आगतः॥ ११४॥

वानरेष्वित्यादि। रामस्यानुचरो वानरः कथमित्याह वानराणां कपिः सुग्रीवो नराणामधिपतेरामस्य सखा जातः ततोऽहं दूत आगतः स्वामीश्वराधिपतीति सप्तमी॥ ११४॥

ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीं। कुशलोऽन्वेषणस्याहमायुक्तो दूतकर्म्मणि॥ ११५॥

आगत्य च लङ्कां प्रविश्य दृष्टाथानइत्याह। ईश्वेत्यादि निशाटानां राक्षसानामीश्वरस्य दशाननस्य अत्र षष्ठ्युदाहृता पुरीं निखिलां निःशेषां विलोक्य किं तत्र वर्त्तत इति प्राप्तइति वक्ष्यमाणेन सम्बन्धः कुशलोऽन्वेषणस्याहं सीतायाअन्वेषणस्य निपुणः आयुक्तोदूतकर्म्मणि दूतकर्म्मणि दूतक्रियायां व्यापृतः आयुक्तकुशलाभ्यामिति षष्ठीसप्तम्यौ॥ ११५॥

ईश्वरस्येत्यादि। निशाटानां राक्षसानां ईश्वरस्य रावणस्य निखिलां समस्तां पुरीं विलोक्य अहं प्राप्तइत्यपिमश्लोकेनान्वयः

कीदृशः अन्वेषणस्य कुशलः सीतान्वेषणनिपुणः दूतकर्मणि आयुक्तः तत्परः स्वामीश्वराधिपतीत्यादिना षष्ठीसप्तम्यौ ॥ ११५॥

दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः। प्राप्तो व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान्॥ ११६ ॥

दर्शेत्यादि । तत्र दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् यतश्च निर्द्धारणमिति सप्तमी दर्शनीयतमत्वेन गुणेन पृथक्करणात् भुजङ्गेभ्योऽपि व्यालतमान् हिंस्रान् राक्षसान् व्यस्यन् अपक्षिपन् पञ्चमीविभक्तइति पञ्चमी भुजङ्गेभ्यो राक्षसानां विभागात् प्राप्तो देव्याः पादमूलमित्यर्थात् ॥११६ ॥

दर्शेत्यादि। दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् भुजङ्गेभ्योऽपि व्यालतमान् अतिहिंस्रान् राक्षसान् व्यस्यन् अवक्षिपन् अयं प्राप्तो देव्याः स्थानमित्यर्थात् गम्यते स्त्रीष्वित्यत्र दर्शनीयतमत्वेन गुणेन समुदायादेकदेशस्य निर्द्धारणात् स्वामीश्वराधिपतीत्यादिना निर्द्धारे सप्तमी भुजङ्गेभ्यइत्यत्र पञ्चमीव्यतिरेके इति सूत्रेण पञ्चमीमाह परः व्यतिरेकोहीनाधिकभावइति परः स्वमते निर्द्धारेऽधिकेनेत्यादिना निर्द्धारेपञ्चमी केनचिद्गुणेन समानधर्मिभ्यो यत्पृथक्करणं सनिर्द्धारः भुजङ्गराक्षसयोस्तु सधर्मित्वं व्यालत्वेन वासवता अपि कश्चित् पञ्चमीत्यनेन निर्द्धारे पञ्चमीमाह॥ ११६ ॥

भवत्यामुत्सुको रामः प्रसितः सङ्गमेन ते। मघासु कृतनिर्वापः पितृभ्यो मां व्यसर्जयत्॥११७।

किमवस्थो राम इत्याह भवेत्यादि। भवत्यां त्वयि उत्सुकः उन्मनाः रामः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीया चेति चकारात्सप्तमी मघाभिर्युक्तः कालः तत्समीपे चन्द्रमसो वर्त्तमानत्वात् नक्षत्रेण युक्तः काल इत्यण् तस्य लुबविशेष इति लुप् तस्मिन्काले पितृभ्यः कृतनिर्वापः दत्तदानः मां व्यसर्जयत् नक्षत्रे च लुपीति सप्तमी तत्रापि लुपि युक्तवद्व्यक्तिवचने इति स्त्रीलिङ्ग बहुवचने भवतः व्यसर्जयदिति विभक्त्यात्प्रातिपदिकेत्यादिना प्रातिपदिकमात्रे प्रथमा ॥११७॥

भवत्यामित्यादि। रामो मां व्यसर्जयत् प्रास्थापयत् कीदृशः सन् भवत्यां त्वयि उत्सुकः उन्मनाः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीया सप्तम्याविति परः समते विषयविवक्षया सप्तमी करणत्वविवक्षया तृतीया मघासु मघानक्षत्रयुक्तकाले पितृभ्यः कृतनिर्वापः कृतदानः काले सप्तमी मघाशब्दस्य तद्युक्तकालवाचित्वं कालवाचिनो नक्षत्रादित्युक्तेरेव गम्यते लोकोपचारात् कालेऽपि स्त्रीलिङ्गत्वं बहुवचनान्तत्वञ्च यदि तु मघानक्षत्रेणेन्दुयुक्तेन युक्तः काल इत्यर्थे इत्यण् तस्य लुप् प्रकृतिवल्लिङ्गवचने इति स्त्रीत्वं बहुवचनत्वाञ्च ॥११७॥

अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः। भवत्याः स्मरताऽत्यर्थमर्पितः सादरं मम॥११८॥

रामेत्यादि। अथवा लक्ष्मणोरामस्य दयमानोरामं रक्षन् दुःखं मा कार्षीरिति दयतेः कर्मणि षष्ठी तवाध्येति त्वां स्मरति अधीगर्थे षष्ठी आश्वासनार्थमाह मा वधीः उद्वेगं मा कार्षीः वधेरीदित्वान्निष्ठायामिट्प्रतिषेधात् विचट्ट् भवति यतोराजेन्द्रौ रामलक्ष्मणौ इहागमस्यागमनस्य भावे अप् उपाकृषातां प्रतियत्नं कृतवन्तौ आगमनस्य निश्चितत्वात् तस्यैव सुग्रीवसख्येन गुणाधानात् तेन कृतः प्रतियत्नइति कर्मणि षष्ठी प्रतियत्ने लुङ् तङ् लुट्॥११९॥

रामेत्यादि। असौ लक्ष्मणोरामस्य दयमानः शोकापनोदनेन रामं प्रतिपालयन् तव अध्येति त्वां स्मरति पूर्व्ववत्कर्मणि षष्ठी आश्वासार्थमाह राजेन्द्रौ क्षत्रियश्रेष्ठौ तौ इहागमस्य उपाकृषातां आगमनमुपस्कृतवन्तौ अतोमा वधीः भयं न कुरु स्वभावचेपणेत्यादिना प्रतियत्ने मं सम्परिःसुमुपादित्यादिना सुम् यतोगुणान्तराधानं प्रतियत्नः निश्चितत्वात् यतएव गमनस्य सुग्रीवसख्येन गुणान्तरस्योत्कर्षस्याधानात् पूर्व्ववत्कर्मणि षष्ठी कृञः प्रतियत्ने कर्मणि षष्ठीति परः वधीउद्वेगे टी॥११९॥

रावणस्येह रोक्ष्यन्ति कपयोभीमविक्रमाः। धृत्वा नाथस्य वैदेहि मन्योरुच्चासयात्मनः॥१२०॥

रावेत्यादि। इह लङ्कायां कपयोभीमविक्रमाः अयद्भपराक्रमाः रावणस्य रोक्ष्यन्ति सरोगं रावणं करिष्यन्ति भीमविक्रमा

इति गुणप्रधानोनिर्द्देशः ततश्च विक्रमेरुजः भावकर्त्तृकत्वात् रुजा र्थानां भाववचनानामज्वरइति षष्ठी अतोवैदेहि धृत्या नाथस्व आशंसस्व धृतिं लभस्वेत्यर्थः आशिषिनाथइति कर्म्मणि षष्ठी आशि षिनाथइत्युपसंख्यानात्तङ् मन्योरुज्जासयात्मनः मन्युं नाशय जसुहिंसायां ताडने च चौरादिकस्य हिंसार्थत्वात्तेन जासिनि प्रहणेति कर्म्मणि षष्ठी॥ १२०॥

रावणस्येत्यादि। इह लङ्कायां कपयोभीमपराक्रमाः सन्तोरा वणस्य रोक्ष्यन्ति रावणं पीडयिष्यन्ति रुजोभङ्गे तो कर्म्मणि षष्ठी अन्ये तु रुजार्थस्य भावकर्त्तृके इति सूत्रेण कर्म्मणि षष्ठ्याउदाह रणार्थं कपयस्तत्सम्बन्धिनोभीमाविक्रमाश्च इह रावणस्य रोक्ष्य न्तीत्यन्वयं कुर्व्वन्ति हे वैदेहि धृत्या नाथस्व धृतिर्भूयादित्यात्म न्याशिषं कुरु धृतिं लभस्वेति भावः कर्म्मणि षष्ठी आशिषिनाथइति षष्ठ्यर्थं परसूत्रं प्रपथाशीरित्यादिना मं आत्मनोमन्योरुज्जा सय आत्मनः शोकं नाशय जसकवधे कर्म्मणि षष्ठी आसिनिप्र हननाटिक्राथिपिषांहिंसायामिति षष्ठ्यर्थं परसूत्रं॥ ॥ १२०॥

राक्षसानां मयि गते रामः प्रणिहनिष्यति। प्राणा नामपणिष्टासौ रावणस्त्वामिहानयन्॥ १२१॥

राक्षेत्यादि। मयि गते रामोराक्षसानां प्रणिहनिष्यति राक्ष सान् मारयिष्यति पूर्व्ववत्कर्म्मणि षष्ठी निप्रहणइति सङ्घातविगृ हीतविपर्य्यस्तग्रहणमित्युक्तं नेर्गदेत्यादिना णत्वं किञ्च प्राणाना

अपणिष्टायमिति यथं रावणस्त्वामिहानयन् प्राणानपणिष्ट विक्री तवान् व्यवहृपणोः समर्थयोरिति षष्ठी प्राणानामपणायिष्टेति पाठान्तरं तद्युक्तं स्तुत्यर्थस्य पणेस्तत्र ग्रहणात् गुपूधूपेत्यादिना आयप्रत्ययेन भवति ॥ १२१ ॥

रावणानामित्यादि। अधि गते सति रामो रावणानां अधि हनिष्यति रावणान् मारयिष्यति प्राप्स्यमाणइति गेर्वत्वं कर्मणि षष्ठी यथा रावणस्त्वामिह लङ्कायामानयन् प्राणानामपणिष्ट प्राणान् विक्रीतवान् व्यवहृपणोर्व्यवहारे इति षष्ठ्यर्थं परस्पर तत्र व्यवहारेइति क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति व्याख्यानं पणकुव्यवहृतीस्तुतौ वारिद्रत्वनेन कमचतरत्यादिसूत्रविहिता क्रिकीयणाद्याविभाषिताः तेन पक्षे नायप्रत्ययः अपणिष्टेति चिन्त्यमिति विद्याविनोदस्य प्रलपितं व्यवस्थितवाधिकारादाया दयोऽऽर्धधातुके वा भवन्तीति पक्षे नायप्रत्ययइति विद्यासाग रीयाकत्वात् समतं युक्तमेव ॥ १२१ ॥

अदेवीद्बन्धुभोगानां प्रादेवीदात्मसम्पदं। शतक्रत्वस्तवैकस्याः स्मरत्यङ्गोरघूत्तमः ॥ १२२ ॥

अदेवीदित्यादि। न केवलं प्राणानपणिष्ट बन्धुभोगानामदेवीत् बन्धुभोगान्विक्रीतवान् दिवस्तदर्थस्येति षष्ठी दिवोव्यवहारार्थ त्वात् प्रादेवीदात्मसम्पदं विक्रीतवान् विभाषोपसर्गइति पक्षे द्वि तीया प्रशब्देन युक्तत्वात् रामानुरागं पुनर्दर्शयन्नाह रघूत्तम

स्मरति अधीगर्थेति षष्ठी श्रङ्कदति एकस्मिन्नर्थङ्कि कालोऽर्थप्रयोगकालेऽधिकरणदति षष्ठी ॥ १२२ ॥

अदेवीदित्यादि। न केवलं प्राणानामपणिष्टासौ रावणो बन्धून् भोगांश्च अदेवीत् क्रीतवान् त्यक्तवानिति यावत् कर्मणि षष्ठी आत्मसम्बदमपि प्रादेवीत् विक्रीतवान् कर्मणि द्वितीया परे तु व्यवहारे सोपसर्गस्य दिवः कर्मणि वा षष्ठी नित्यमनुपसर्गस्येत्याहुः अथ संक्षिप्य पुनरपि रामानुरागं दर्शयति अङ्कः शतकृत्वो दिवसे शतं वारान् रामएकस्त्वामेव एकां त्वां स्मरति चकृत्वस् वारेदति शतशब्दात् चकृत्वस् तद्योगे स्वामीश्वराधिपतीत्यादौ सुजर्थैरिति अहन्शब्दात्षष्ठी तवेति कर्मणि षष्ठी ॥ १२२ ॥

तवोपशायिका यावच्चायस्थेतयन्ति न । प्रतिसंदिश्यमां तावद्भर्त्तुः शार्ङ्गस्य मैथिलि ॥ १२३ ॥

एवं तामाश्वास्य सन्देशन्दापयितुमाह तवेत्यादि। हे मैथिलि तवोपशायिका परिपाट्या शयनं याभीरायसीभिः सहेत्यर्थात् पर्य्यायार्हणोत्पत्तिषु ण्वुच यावन्न चेतयन्ति न प्रतिबुध्यन्ते ताव त्प्रतिसन्दिश्यतां प्रतिसन्देशोदीयतां शार्ङ्गस्य भर्तुः शार्ङ्गं धनुर्धारयतो रामस्य तव शार्ङ्गस्येति यथाक्रमं कर्तृकर्मणोः कृतीति षष्ठी ॥ १२३ ॥

तवेत्यादि। हे मैथिलि तवोपशायिका पर्य्यायशयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायप्राप्ता ताश्च राक्षसीयावन्न चेत

यन्ति न प्रतिबुध्यन्ते तावत् शार्ङ्गस्य भर्त्तुर्धनुर्धारयतो रामस्य कृत प्रतिसन्दिश्यतां प्रतिसन्देशोदीयतां इत्येवं हनूमान् प्रोचे इति पूर्व्वेण सम्बन्धः उपपूर्व्वशीङ् पर्य्यायभ्रयणवाचकः भ्रश्युपकेति आपकात् भावे णकः स्त्रीलस्य ढघेक्तीत्यादिना तवेत्यत्र कर्त्तरि षष्ठी शार्ङ्गस्येत्यत्र कर्म्मणि तव उप समीपे शायिकाः भ्रयानाः राचस्यः कर्त्तरि णकइति केचित् चितकसंज्ञाने चुर्भोञ्जिः ॥१२३॥

पुरः प्रवेशमाश्चर्य्यं बुद्धा शाखामृगेण सा। चूडामणिमभिज्ञानं ददौ रामस्य सम्मतं ॥१२४।

पुरइत्यादि। शाखामृगेण मर्कटेन पुरोलङ्कायाः दुःप्रवेशायायाः प्रवेशः तमाश्चर्य्यमद्भुतं बुद्धा सा सीता चूडामणिमभिज्ञानं ददौ सर्व्वमुक्तमस्य सम्भाव्यतइति उभयप्राप्तौ कर्म्मणीति षष्ठी प्रवेशइत्युभयप्राप्तौ कृति लङ्काहनूमतोः कर्म्मकर्त्तृत्वात् रामस्य संमतं प्रियं मतिबुद्धीत्यादिना वर्त्तमाने निष्ठा नलोकेति षष्ठी प्रतिषेधे प्राप्ते क्तस्य च वर्त्तमानइति षष्ठी॥ १२४॥

पुरइत्यादि। शाखामृगेण वानरेण पुरोलङ्कायाः प्रवेशमाश्चर्य्यं बुद्धा मत्वा सा सीता चूडामणिमभिज्ञानं शिरोरत्नं स्वकीयचिह्नं ददौ रामस्य सम्मतं रामेण मन्यमानं श्लाघमानं सदा स्मरणात् श्लाघ्यकार्य्येति वर्त्तमाने क्तः तद्योगे कामुकसङ्गार्थ क्तइति कर्त्तरि षष्ठी अपूर्व्वविशेषेञ् तद्योगे ढघेक्तीति पुरइत्य

स्य कर्म्मणि षष्ठी क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् शास्त्रानुगेषेत्यत्र ढघेक्तेतीत्यनेन षष्ठीविषयेऽपि साधनेह लित्यादिना कर्त्तरि तृतीया इति केचित् वस्तुतस्तु यचैककयोगे कर्त्तरि कर्म्मणि च षष्ठ्याविषयः स्यात् तत्र ढघेक्ततीत्यादिना कर्म्मणि नित्यं षष्ठी स्वभावकेत्यादौ सढइत्यनेन तु कर्त्तरि विभाषया षष्ठी षटेषष्ठी योग्यकर्म्मवत् क्तिप्रयुज्यमानैरित्यर्थः यत्तु कर्तृकर्म्मप्राप्तौ कर्म्मण्येवैकक्ततीति षष्ठ्यर्थं क्रमदीश्वरस्य सूत्रं तत्तु प्रायिकं अनात्तृकृद्भिर्व्वैत्यपरे इति तेनैव पश्चादुक्तं शब्दानामनुशासनमाचार्य्येणाचार्य्यस्येत्याद्युदाहरन्ति प्राञ्चः॥ १२४॥

रामस्य शयितं भुक्तं जल्पितं हसितं स्थितं। प्रक्रान्तञ्च मुदः पृष्ट्वा हनूमन्तं व्यसर्ज्जयत्॥ १२५॥

रामेत्यादि। रामस्य अभिज्ञानं दत्वा शयितादिकं मुदः पृष्ट्वा हनूमन्तं व्यसर्जयत् प्रेषितवती तस्य शयितं शयनस्थानं किं भूमौ शेते अन्यत्रेति वा भुक्तं भोजनस्थानं किं गृहे भुङ्क्ते मुनिजनगृहे वेति जल्पितं मन्त्रस्थानं किं रहसि मन्त्रयते प्रकाशे वेति हसितं हसनस्थानं किं शृंगारवस्तुनि हसति वीरवस्तुनि वेति स्थितं निवासस्थानं किं गुहायां तिष्ठत्युत तरुतले वेति प्रक्रान्तं प्रचंक्रमणस्थानं अनुनासिकेत्यादिना दीर्घः किं अङ्गने क्रम्यते अन्यत्र वेति एषां ध्रौव्यगतिप्रत्यवसानार्थत्वात् क्तोऽधिकरणेवेति क्तः तस्य प्रयोगे अधिकरणवाचिनस्येति षष्ठी॥ १२५॥

रामस्येत्यादि। अभिज्ञानं दत्वा रामस्य शयितादि मुहुर्म्मुहुः वारं वारं पृष्ट्वा सीता हनूमन्तं व्यसर्ज्जयत् प्रेषितवती शयितं शय नस्थानं भूमिः शय्या वेति भुक्तं भोजनस्थानं वनभूमं मुनिगृहं वेति जल्पितं मन्त्रणास्थानं रहः प्रकाशितं वा हसितं हास्यस्थानं मृणा रवस्तु वीरवस्तु वा स्थितं वासस्थानं तरुतलं गृहादिकं वा प्रका न्तं चंक्रमणस्थानं अरण्यं वनं वा सर्व्वत्र ध्रौव्यगत्यर्थेनार्थादिति आधारे क्तः तद्योगे कामुकसङ्घार्थकेइति कर्त्तरि षष्ठी यदि भा वे क्तः तदा स्वभावक्तेति षष्ठी सम्बन्धविवक्षया वा ॥ १२५ ॥

असौ दधदभिज्ञानं चिकीर्षुः कर्म्म दारुणं। गामु कोऽप्यन्तिकं भर्त्तुर्म्मनसाचिन्तयत्क्षणं ॥ १२६ ॥

असावित्यादि। असौ हनूमान् दधत् धारयन्नभिज्ञानं चिह्नं कर्त्तृकर्म्मणोः कृतीति षष्ठ्यां प्राप्तायां नलोकेति लप्रयोगे प्रतिषेधः शतृइति शानचाद्योग्रहणात् दारुणमशोकवनिका भङ्गादिकं कर्म्म चिकीर्षुः कर्त्तुमिच्छुः उकारप्रश्लेषात् षष्ठ्याः प्रति षेधः भर्त्तुः स्वामिनः अन्तिकं समीपं गामुकोऽपि गमनशीलोऽपि उकप्रयोगे प्रतिषेधः मनसा क्षणं चिन्तितवान् वक्ष्यमाणं कर्म्म ॥ १२६ ॥

असावित्यादि। असौ हनूमान् अभिज्ञानं चिह्नं दधत् धार यन् दारुणं कर्म्म चिकीर्षुः कर्त्तुमिच्छुः भर्त्तू रामस्य अन्तिकं समीपं गामुकोगमनशीलोऽपि क्षणं मनसाचिन्तयत् वक्ष्यमाणमिति धाञ्वं डधेकृतीति सूत्रे व्यादिवर्ज्जनात् न कर्म्मणि षष्ठी ॥ १२६ ॥

कृत्वा कर्म्म यथादिष्टं पूर्व्वकार्य्याविरोधि यः। करो त्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमं ॥ १२७ ॥

कृत्वेत्यादि। यो दूतो यथोद्दिष्टं कर्म्म कार्य्यं कृत्वा अत्र कृत्वेत्यव्ययप्रयोगे प्रतिषेधः तनउत्तरकालं पूर्व्वकर्म्माविरोधि पूर्व्वकृतस्य कार्य्यस्य यदविरोधि तदधिकं करोति तमुत्तमं दूतमाहुर्विद्वुर्नीतिविद इति शेषः मया च यथोद्दिष्टं सीतान्वेषणं कृतमिति भावः॥ १२७ ॥

कृत्वेत्यादि। यो दूतो यथादिष्टमाज्ञानतिक्रमेण कार्य्यं कृत्वा पूर्व्वकार्य्याविरोधि अधिकं कार्य्यान्तरं करोति तमुत्तमं दूतमाहुर्नीतिविद इति शेषः तस्मात् सीतान्वेषणमादिष्टं कर्म्म कृत्वा अधिकमपि करिष्यामीत्यग्रिमश्लोके वक्ष्यति कृत्वेति व्यवर्ज्जनात् न तद्योगे षष्ठी ॥ १२७ ॥

वैदेहीं दृष्टवान् कर्म्म कृत्वान्यैरपि दुष्करं। यशो यास्याम्युपादाता वार्त्तामाख्यायकः प्रभोः ॥ १२८ ॥

तदेव च दर्शयन्नाह वैदेहीत्यादि। अहमद्य तावद्वैदेहीं दृष्टवान् निष्ठाप्रयोगे प्रतिषेधः अन्यदपि कार्य्यमतिदुष्करं कृत्वा अस्य प्रयोगे प्रतिषेधः ततोयशउपादाता आत्मसात्कर्त्ता इदमति दुष्करं तेन कृतमिति तृजन्तस्य प्रयोगे प्रतिषेधः वार्त्तामाख्याय

कः प्रभोर्वार्त्तामाख्याता ख्यातिभविष्यदधिकारात् तुमुन्ण्वुलौ क्रियायामिति ण्वुल् अकेनोर्भविष्यदाधमर्ण्ययोरिति प्रतिषेधः ॥१२८॥

वैदेहीमित्यादि। वैदेहीं दृष्टवानहं अन्यैरतिदुष्करं कर्म वक्ष्यमाणं वनभङ्गादि कृत्वा यन्त्रउपादाता उपादानशीलः सन् प्रभोः समीपे वार्त्तामाख्यायकः आख्यातुं यास्यामि क्तवतुखल् र्थश्रीलार्थतृणां योगे षष्ठीनिषेधोदर्शितः आख्यायकइति अस्यु ण्वकेनुत्के तृन्ण्वकौ धेइति विधानादन्यत्रापि ण्वकोभवतीति ज्ञापितं तेनात्र तुमर्थे ण्वकोबोध्यः किम्वा तृण्वकौ धेइत्यनेनैव ण्वकः तत्र कालस्याविशेषात् सर्व्वस्मिन् काले तौ भवतइति प्राप्तं अत्र तु भविष्यत्कालोविवक्षितः आख्यायकः आख्यास्यन्नित्यर्थः क्वचिद्पवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति न्यायात् षष्ठीविषयेऽपि द्वितीया परे तु क्रियार्थायाङ्गमिष्यतीति सूत्रेण ण्वकं ण्वकस्तुमर्थेप्रायइति सूत्रेण षष्ठीनिषेधश्चाहुः प्रायोग्रहणात् क्वचित् षष्ठीमपि॥ १२८ ॥

राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनं। इति संचिन्त्य सदृशं नन्दनस्याभनक् कपिः ॥ १२९ ॥

राक्षेत्यादि। इदं वनमशोकवनिकाख्यं राक्षसेन्द्रस्य संरक्ष्यं रक्षार्हं अर्हेकृत्यः तृचश्चोर्थत् तन्मया लव्यं लवनीयं कृत्यानां कर्त्तरिवेति षष्ठी तृतीये कर्त्तरि भवतः इत्येवं सञ्चिन्त्य कपिर्नन्दनस्य वनस्य सदृशं तुल्यं तुल्यार्थैरिति पक्षे षष्ठी अभनक्

भग्नवान् भञ्जेर्लङि श्नमलोपश्चेति नलोपे चक्‌स्वादिलोपे जश्चे चर्त्वे च रूपं ॥ १२८ ॥

राघेत्यादि। इदं वनं राघवेन्द्रस्य संरक्षं सम्यक्‌रक्षणीयं मया सर्वं छेदनीयं इति मत्विम्य नन्दनस्य इन्द्रवनस्य सदृशं तद्वनं कपिर्हनूमान् अभनक् भग्नवान् भञ्जेर्थी इत्यादिनात् अण् स्वभावकेति स्थितौ कर्त्तरि विभाषया षष्ठी समार्थेनेति समार्थेन षष्ठी॥ १२८ ॥

राघवाभ्यां शिवं दूतस्तयोरहमिति ब्रुवन्। हितो भनज्मि रामस्य कः किं ब्रूतेऽत्र राक्षसः ॥ १३० ॥

राघेत्यादि। राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्तु तयो हनूमान् दूतोहितोरामस्य भनज्मीदं वनं एवञ्च क्रियमाणे कोभवतां मध्ये राक्षसः किं ब्रूते इत्येवं ब्रुवन् बभञ्ज पवनात्मजो रिपुवनमिति वक्ष्यमाणेन सम्बन्धः राघवाभ्यां शिवं हितोराम स्येति चतुर्थी चाशिष्येत्यादिना षष्ठीचतुर्थ्यौ। इति विभक्त्यधिकारः ॥ १३० ॥

राघवाभ्यामित्यादि। हे राक्षसा राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भूयादिति शेषः भद्रार्थवचनेत्यादिना हितार्थत्वात् शिव शब्दयोगे चतुर्थी तत्र हि भद्रइत्यनेन भद्रार्थानां भद्रभद्र क्षेमपर्याप्तसमर्थादीनां ग्रहणं अर्थशब्दः प्रयोजनवाची तेन प्रयोजनार्थानां ग्रहणं हितमित्यनेन हितार्थानां भद्रक्षेमकुशलशिवा

दीनां कल्याणपर्य्यायपठितानां अन्येषाञ्च साध्वादीनां ग्रहणं हि तार्थत्वेन खस्तिशब्दे गृहीतेऽपि खस्तिशब्दग्रहणं दमार्थैनेत्यादि ना हितार्थत्वेन प्राप्तषष्ठ्याप्रसक्त्यर्थं अतएव खस्तिवर्त्तं कुशला र्थैरिति विभाषया चतुर्थ्यर्थं परत्वं एवं सुखार्थानां मुत्प्रीत्यादी नां ग्रहणं अतएव चत्राय साधुः चत्रियदत्युदाहृतं रामस्य हितः सन् इदं वनं भनज्मि समार्थैनेति सम्बन्धे हितयोगे च षष्ठी एवं क्रियमाणे अत्र कर्म्मणि कोराचसः किं ब्रूतेदति ब्रुवन् पवनात्मजो रिपुवनं बभञ्जेत्यपिमश्लोकेनान्वयः॥१३०॥

विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनं। शकुननिनादनादितककुब्विलोलविपलायमानहरिणं हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजोरिपुवनं॥१३१॥

॥ इति भट्टिकाव्येऽष्टमः सर्गः॥ ८॥

विल्वित्यादि। कीदृशं बभञ्ज विलुलितानां पुष्पाणां रेणुभिः कपिशं पिङ्गं प्रशान्ताअवसन्नाः कलिकाः पलाशानि पत्राणि कुसुमानि च यत्र कुसुमानां निपातेन विचित्रा वसुधा यत्र सशब्दैर्निपतद्भिर्द्रुमैरुत्काउन्मनसः शकुनायत्र शकुनानां पलाय मानानां निनादेन नादिताः सञ्जातनादाः ककुभोदिशो यत्र विलोलाव्याकुलाविपलायमानाहरिणायत्र हरिणस्येव लोच

नी यस्याः सीतायाः तस्या अधिवसतिं निवासं। इत्यनभिहिताधिकारः॥ १२१॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां अधिकारकाण्डे तृतीयः परिच्छेदः काव्यस्याशोकवनिकाभङ्गोनामाष्टमः सर्गः॥

विलुलितेत्यादि। पवनात्मजोरिपुवनं वभञ्ज कीदृशं विलुलितानां विघटितानां पुष्पाणां रेणुभिः कपिशं पिङ्गलं प्रशान्तानि अवसन्नानि कलिकाः पत्राणि पुष्पाणि च यत्र कुसुमानां निपातेन विचित्रा वसुधा यत्र सशब्दैः सशब्दं वा निपतद्भिर्द्रुमैरुत्काः स्थानान्तरं गन्तुमुन्मनसः शकुनाः पक्षिणो यत्र शकुनानां पलायमानानां निनादेन नादिताः संजातनादाः शब्दायमानीकृता वा ककुभो दिशो यत्र विलोलाव्याकुलाः सन्तो विपलायमाना हरिणा यत्र हरिणस्येव विलोचने यस्याः सीतायास्तदधिवसतिं तन्निवासस्थानं॥ १२१॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डेऽष्टमः सर्गः॥

अथ प्रकीर्णकाः।

द्रुभङ्गध्वनिसंविग्नाः कुवत्यच्छिकुलाकुलाः। अकार्षुः क्षणदाचर्य्योरावणस्य निवेदनं॥ १॥

अथान्तरे प्रकीर्णकश्लोकानाह द्रुभङ्गेत्यादि। क्षणदाचर्य्यो निशाचर्य्यः चरेष्टः रावणस्य निवेदनमकार्षुः कृतवत्यः वक्ष्यमा

मत्यं अवाधीत् वाति म यमरमेति इत्यवनी अदुपवनं प्रिमोसेण चन्द्रेण आप्यानं इष्टुं आप्याधीकृष्टौ कर्मणि क्तः स्वाङ्गोपदति यलोपः किरणोऽत्रमयूखांशुगभस्तिघृणिधृष्णय इत्यमरः तदुप वनं कपिर्भनक्ति इति निवेदनमकार्षुरिति पूर्वेण सम्बन्धः॥ २॥

ततोऽशीतिसहस्राणि किङ्कराणां समादिशत्।
इन्द्रजित्सुर्विनाशाय मारुतेः क्रोधमूर्च्छितः॥ ३॥

तत इत्यादि। निवेदनानन्तरमिन्द्रजित्सूः रावणः इन्द्रजितं सु त इति सत्सूद्विषेत्यादिनानुपसर्गे क्विप् मारुतेर्हनूमतोविनाशाय अशीतिसहस्राणि समादिशत् समादिष्टवान् किंकराणां किं कुर्व्वे णि दिवाविभेत्यादिना टच् क्रोधमूर्छितः क्रोधोद्धतः मूर्छः समु च्छ्राये वर्त्तमानत्वात्॥ ३॥

तत इत्यादि। ततोऽनन्तरमिन्द्रजित्सूरावणः क्रोधेन मूर्छितः संजातमूर्छः सन् मारुतेर्हनूमतोविनाशाय किङ्कराणां अशीति सहस्राणि समादिशत् आज्ञापयत् इन्द्रजितं सूते इति क्विप्॥ ३॥

शक्त्यष्टिपरिघप्रासगदामुद्गरपाणयः। व्यश्नुवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः॥ ४॥

शक्त्यादि। ते किङ्करावनं प्रापुः प्राप्तवन्तः शक्त्यादयः प्रह रणविशेषाः पाणौ येषामिति प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ

भवतः व्यग्रुवागाः द्विशोव्यामुवन्तः अग्रूत्थाग्नी यावादिकः इति विषोपमाः भुजङ्गवत् दृष्ट्यैव विनाशयन्तइत्यर्थः ॥ ४ ॥

अक्षोत्यादि। अस्त्राइय: पाणौ येषां ते किङ्कराश्वनं प्रापुः द्विशोव्यग्रुवानाव्यामुवन्तः अग्रूङ्ग्व्याप्तिषंहत्योः दृष्टिविषैः सर्पविशेषैरुपमा येषां दृष्टिर्दर्शनं विषोपमा विषमिव येषामिति वा ॥ ४ ॥

दध्वान मेघवद्भीममादाय परिघं कपिः। नेदुर्दीप्तायुधास्तेऽपि तडित्वन्तइवाम्बुदाः ॥ ५ ॥

दध्वेत्यादि। कपिर्भीमं परिघं भयानकमर्गलमादाय मेघवद्दध्वान ध्वनति स्म तेऽपि किङ्कराः तडित्वन्तइवाम्बुदाः नेदुः नदन्ति स्म किङ्कराणां कृष्णत्वात् मेघैः सादृश्यं आयुधानाञ्च तडितेति ॥ ५ ॥

दध्वानेत्यादि। कपिर्हनूमान् भीमं भयानकं परिघं लौहवन्मुद्गरमादाय गृहीत्वा मेघइव दध्वान ध्वनञ्चक्रे तेऽपि दीप्तप्रहरणा राक्षसास्तडिद्युक्तामेघाइव नेदुः शब्दितवन्तः ॥ ५ ॥

कपिनाम्भोधिधीरेण समगंसत राक्षसाः। वर्षाह्लुततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥

कपीत्यादि। कपिना अम्भोधिधीरेण क्षोभ्यत्वात् राक्षसाः समगंसत सङ्गताः समोगमीत्यादिना तङ् लुङ् यथा सिन्धवो नद्यः उद्धुततोयौघाः उद्भिन्नजलपूराः समुद्रेण सङ्गच्छन्ते ॥ ६ ॥

कपिनेत्यादि। ते राघवाः समुद्रवद्वीरेण कपिना समगं सत मिलिताबभूवुः समीगमच्छेति सं मान्तोऽदन्तरव्यताहेभः यथा वर्षासुद्भुतजलपूराः सिन्धवो नद्यः समुद्रेण सङ्गताभवन्ति ॥ ६ ॥

लाङ्गूलमुद्धतं धुन्वन्नुद्वहन् परिघं गुरु। तस्थौ तोरणमारुह्य पूर्व्वं न प्रजहार सः ॥ ७ ॥

॥ एते प्रकीर्णकाः ॥

लाङ्गूलेत्यादि। स हनूमान् लाङ्गूलं पुच्छमुद्धतं उत्क्षिप्तं धून्वन् धूञ्कम्पनइति स्वादौ पठितः परिघं गुरुं उद्वहन् तोरणमारुह्य तस्थौ न तु पूर्व्वं प्रजहार प्रहृतवान् शूराणां पश्चात् प्रहारित्वात् ॥ ७ ॥

एते प्रकीर्णकाः।

लाङ्गूलेत्यादि। स हनूमान् तोरणं बहिर्द्वारमारुह्य उद्धतमुत्क्षिप्तं लाङ्गूलं धुन्वन् कम्पयन् गुरुं परिघं उद्वहन् धारयन् तस्थौ पूर्व्वं न प्रजहार शूराणां पश्चात्प्रहारित्वात् ॥ ७ ॥

एते प्रकीर्णकाः।

॥ सिचि वृद्ध्यधिकारमाह ॥

अत्सारिषुः शराम्भांसि तस्मिन्रक्षःपयोधराः। न चाक्षासीन्न चाग्रासीत्त्रासं कपिमहीधरः ॥ ८ ॥

इतःपरं सिचि वृद्धिमधिकृत्याह अचेत्यादि। तस्मिन्वने रचः पयोधराः रक्षांसि पयोधरा इव शरानांसि शरान् अश्मांसी व अचारिषुः चरितवन्तः चरतिरकर्म्मकः चरेत् चुतजष्टिरि त्यादिप्रयोगेषु दृश्यते इह तु सकर्म्मको विवक्षितः कपिर्महीधर इव न चाक्रालीत् न चलितवान् इयोरप्यतो हलादेर्लघोरिति विकल्पे प्राप्ते अतो लान्तस्येति सिचि वृद्धिः नाव्राजीत् नासं भय श्च न जगाम महीधरतुल्यत्वात् नेटीति प्रतिषेधस्यातो हलादेर्ल घोरिति विकल्पिते वद्‌व्रजेत्यादिना वृद्धिः॥ ८॥

अथ सिचि वृद्ध्यधिकारः समते सिच् सिः। अचेत्यादि। तस्मिन् कपौ रक्षांसि पयोधरा इव शरानश्मांसीव अचारिषुः क्षिप्तवन्तः किन्तु कपिर्महीधर इव न च अक्रालीत् नैव चलित वान् न च आसमव्राजीत् प्राप्तवान् चर्म्मसञ्चलने क्रलह्मल चाले व्रजगतौ सर्व्वत्र व्यांसिः व्रजवदेति व्रिः॥ ८॥

अवादीत्तिष्ठतेत्युच्चैः प्रादेवीत्परिघं कपिः। तथा यथा रणे प्राणान् बह्ननामग्रहीद्द्विषां॥ ९॥

अवेत्यादि। ततउत्तरकालं कपिस्तिष्ठत मा पलायध्वमिति उच्चैस्तानवादीत् पूर्व्ववद्वृद्धिः तथा तेन प्रकारेण परिघं परिघेण प्रादेवीत् विजिगीषते स्म दिवःकर्म्मचेति परिघस्य कर्म्मसंज्ञा दिवे र्नेटीति वृद्धिप्रतिषेधः यथा बह्ननां द्विषां शत्रूणां प्राणानग्रहीत् निगृहीतवान् अतो हलादेरिति विकल्पे प्राप्ते ह्म्यन्तक्षणश्वसइति प्रतिषेधः॥ ९॥